राजनीतिरत्नाकरे येषां वचनानि प्रामाणिकतयोपन्यस्तानि तेषां ग्रन्थानां ग्रन्थकाराणाञ्च नामानि यथा—

| | | |
|---|---|---|
| १ | अर्थप्रदीपे व्यासः .. .. | 72. |
| २ | अर्थशास्त्रम् .. .. | 55. |
| ३ | कात्यायनः .. .. | 16, 20, 21, 69, 71, 77. |
| ४ | कामन्दकः .. .. | 33, 54. |
| ५ | (वाचस्पत्यम्) .. .. | 54. |
| ६ | कोशः (अमरः) .. .. | 11. |
| ७ | कोशः (कोशकारः) .. .. | 71, 75. |
| ८ | कुल्लूकभट्टः .. .. | 2. |
| ९ | गोपालः .. .. | 72, 75. |
| १० | गुरुः .. .. | 3, 33. |
| ११ | नारदः .. | 12, 13, 17, 20, 22, 23, 56, 62, 68, 71, 77. |
| १२ | नारदीयम् .. .. | 5. |
| १३ | (नीतौ) नारदः .. .. | 3. |
| १४ | राजनीतौ नारदः .. .. | 70. |
| १५ | नीतिः .. .. | 28, 31, 32, 43, 76. |
| १६ | नीतिकल्पतरुः .. .. | 8. |
| १७ | पद्मम् .. .. | 70. |
| १८ | पल्लवकारः .. | 16, 32, 37, 47, 48, 63, 70, 73. |
| १९ | प्राञ्चः (नव्याः) .. .. | 20, 56. |
| २० | बार्हस्पत्यम् .. .. | 70. |
| २१ | भागवतम् .. .. | 70. |
| २२ | मनुः .. | 2, 4, 5, 6, 7, 10, 11, 14, 15, 19, 22, 24, 27, 28, 31, 33, 34, 35, 37, 39, 40, 42, 43, 45, 55, 56, 57, 58, 59, 62, 63, 65, 66, 68, 71, 76. |
| २३ | महाभारतम् .. | 3, 9, 11, 26, 27, 28, 32, 34, 36, 39, 45, 67. |
| २४ | (मय-मैत्र-विशालाक्ष-मनु-बृहस्पति-शुक्राः) | 59. |
| २५ | मिताक्षरा .. .. | 63, 76. |

---

# विषयानुक्रमणिका ।

### पुरोहितादिकृतराज्यदाननिरूपणम् (पञ्चदशस्तरङ्गः) ७०—७२

राज्ञि मृते राजपुत्राय पुरोहितमन्त्रिभिः राज्यदानं ज्येष्ठाय। सप्ताङ्गकं राज्यम्। राजधनं दीनानाथसकलप्राणिनामंशित्वम्।

### अभिषेकनिरूपणम् (षोडशस्तरङ्गः) ७३—७७

यौवराज्ये राज्ये वा सुतस्य अभिषेचनम्, प्रजाविप्रानुमोदितम्। युवराज्यस्य वृद्धराजसापेक्षत्वम्। अभिषेचनकर्म्माणि। राज्यदाने प्रजा एव विष्णुः साक्षी च। अन्ये राजपुत्रा भर्त्तव्याः। अभिषिक्तस्य प्रथमं राष्ट्रस्यैव साधनम्। ग्रन्थसमाप्तिः।

---

CHAṆḌEŚVARA'S

# RĀJANĪTI-RATNĀKARA

**चण्डेश्वरविरचितो**

# राजनीति-रत्नाकरः

---

॥ ॐ नमो गणेशाय ॥

सूत्रामान्धकयोर्विवादमनिशन्दृष्ट्वा जिगीष्वोरहं
राजेत्येव मिथः पुरा निगदतोरग्नीक्षणप्रेक्षणात् ।
योऽसौ निर्णयति स्म संप्रति शिवः पायात्पराणां परः
स स्मेराचलकन्ययाऽप्यनुमतो[1]. ब्रह्मादिभिः प्रार्थितः ॥
राज्ञा **भवेशे**नाज्ञप्तो राजनीतिनिबन्धकम् ।
तनोति मन्त्रिणामार्य्यः श्रीमान् **चण्डेश्वरः** कृती ॥
राज्ञो निरूपणञ्चादावामात्यस्य तदुत्तरम् ।
ततः पुरोहितादेश्च प्राड्विवाकस्य तुर्य्यके ॥
सभ्यस्य पञ्चमे चैव षष्ठे दुर्गस्य सप्तमे ।
मन्त्रणा[2] कार्यदेशादेः कोषस्य तदनन्तरम्[3] ॥
बलस्य नवमे चैव सेनान्यो दशमे तथा ।
एकादशे दूतचारप्रती[4]हारादिकस्य तु ॥

---

[1] **अनुमतमिति पुस्तकेषु ।**
[2] **मन्त्रिणा । (घ) (ङ)योः ।**
[3] **तदन्तरम् । (घ) (ङ)योः ।**
[4] **प्रतिहारादिकस्य तु । (ङ) ।**

द्वादशे राजकृत्यस्य[1] दण्डस्याथ त्रयोदशे ।
अथ राज्यप्रदानस्य महीपेन चतुर्द्दशे ॥
पुरोधसा[2] पञ्चदशे तत्कुलीनाय धर्म्मतः ।
षोडशे चाभिषेकस्य विचार्य्याकारि यत्नतः ॥
एवं रत्नाकरे चास्मिन् तरङ्गाः षोडशोदिताः ।
निरीक्ष्य नीतिशास्त्राणि श्री**चण्डेश्वरमन्त्रिणा** ॥
राजार्थशास्त्रं राजनीतिः ॥

## तत्र प्रथमं राज्ञो निरूपणम् ॥ (C. I.)

**मनुः ।**

"अराजके हि लोकेऽस्मिन् सर्व्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत्प्रभुः" ॥[3]

राजानमित्यस्य राजमात्रे तात्पर्य्यं विशेषानभिधानात् । असृजदिति क्रियामात्रं काल उपलक्षणम् ।

"राजधर्म्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः[4] ।
सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा"[5] ॥

इत्यादि प्रागविशेषेणो[6]पादानात्[7] । तथा च प्रजारक्षको राजेत्यर्थः। ननु प्रजाऽरक्षकस्य[8] वेणादेः कथं राजत्वमिति चेन्न। दृष्टतद्योग्यताया[9] एव विवक्षितत्वात्। अतएव **कुल्लूकभट्टः**[10] "राजशब्दोऽपि नात्र क्षत्रियजातिपरः[11] किन्त्वभिषिक्तजनपदपालयितृपुरुषपरः"। **राजनीतिकामधेनौ** 'राज्याभिषिक्तो राजा प्रजापालनादेस्तदीयत्वात् तत्प्राक् ज्ञानासंभवाच्चेति'; प्रजापालने प्रवृत्त इति बहवः। वस्तुतस्तु प्रजापालनप्रवृत्त्यभिषेकादयोऽस्य कारणमात्रं प्रजास्वामित्वे

---

[1] शत्रुवर्गस्य। (घ)(ङ)योः ।
[2] (ग) पुरोधसामिति ।
[3] म० । ७ । ३ ।
[4] (घ)(ङ)योः। भवेन्नरः ।
[5] म० । ७ । १ ।
[6] (क)(ग)योः। प्राग्विशेषेणेति । (ङ) । परागविशेषेणेति।
[7] (घ) । उपादानाच्च ।
[8] (घ)(ङ)योः। प्रजारक्षकस्य ।
[9] (ङ) । तद्योग्यतया ।
[10] (घ)(ङ)योः । कुल्लूभट्टः ।
[11] म० । ७ । १ । कु० क्षत्रिजातिवचनः। किन्त्वभिषिक्तजनपदपुरपालयितृपुरुषवचनः ।

राजत्वेन प्रसिद्धो राजा; 'केवलशौर्य्याद्याप्तराज्यस्य राजत्वव्यवहारादिति' **गुरवः**[१] ॥

विशेषलक्षणान्याह **याज्ञवल्क्यः**[२] ।

"महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्म्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्" ॥

अचिरक्रियः अदीर्घसूत्रः इत्यादिलक्षणं प्रशंसापरम्। स्मृतिपुराणादौ सपाप-नृपस्य नरकविधानात् ॥ अभिषेककाले प्रथमपरीक्षार्थमिति बहवः ॥

राजा त्रिविधः, सम्राट् सकरोऽकरश्च। तदाह **नीतौ नारदः**[३] ।

राजानमविशेषेण निजगाद मनुः पुरा ।
विशेषेणैव वक्ष्यामि संशयो न यथा भवेत् ॥
राजा तु त्रिविधो ज्ञेयस्सम्राट् च सकरोऽकरः ।
सर्व्वेभ्यः क्षितिपालेभ्यो नित्यं गृह्णाति वै करम् ॥
स सम्राडिति विज्ञेयश्चक्रवर्त्ती स एव हि ।
मासि मासि करन्दद्यात्प्रत्यब्दञ्च तथैव च ॥
सकरः स तु विज्ञेयो राजलक्षणसंयुतः ।
करं सन्देशव्याजेन यो ददाति हि स्वेच्छया ।
अधीश्वरन्तमवाहुः शास्त्रे शास्त्रविदो जनाः ॥

**महाभारते ।**

"इन्द्रादनवरः श्रीमान् देवैरपि सुदुर्ज्जयः ।
तस्य सर्व्वे महीपाला वर्त्तन्ते स्म वशे सदा ।
स हि सम्राडभूत्तेषां वित्तेन च बलेन च ॥

---

[१] **चण्डेश्वरगुरुः। "मद्गुरुपद्धतौ" इति च राजनीतिरत्नाकरे षोडशे तरङ्गे द्रष्टव्यम् ।**

[२] **या० । १ । ३०९–१० ।**

[३] **एष पाठो मुद्रितनारदस्मृतौ नोपलभ्यते। नारदीयो धर्मशास्त्रादन्य एवार्थशास्त्रग्रन्थ इति प्रतीयते ।**

पारावारमभिव्याप्य शासना यस्य नान्यथा ।
तस्याधीनास्तु विज्ञेया राजानश्च अधीश्वराः"[१] ॥

तथा च सकलराजेभ्यो यः करग्राही स[२] सम्राट्। सम्राजे करदो यः स सकरः। स्वेच्छया करदोऽकरः॥ स्मृता[३]दावमी राजत्वेन प्रख्याता, लोके तु राजेति सकरः चक्रवर्त्ती सम्राट् अधीश्वरो महाराज इति प्रसिद्धाः, विशेषप्रतिपत्त्यनुरोधात्; परन्तु त्रयाणामपि **धर्म्मं सममेव** विशेषानभिधानात्। तथा च **मनुः**[४] ।

"इन्द्रानिल-यमार्क्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां[५] मात्राभ्यो निर्म्मितो नृपः ।
तस्मादभिभवत्येष सर्व्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैव[६] चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
एकमेव दहत्यग्निर्न्नरन्दुरुपसर्प्पिणम्[७] ।
कुलन्दहति राजाग्निस्सपशुद्रव्यसञ्चयम्[८]" ॥

**व्यासः** ।

"पर्ज्जन्य इव लोकानामाधारः पृथिवीपतिः" ॥[९]

**राज-नीति-कामधेनौ**। अधीश्वरो द्विविधः "शौर्य्यादकरः सम्राडनुग्रहाद करः। आद्यः स्वेच्छयैव दण्डादि ददाति। द्वितीयोप्यनुग्रहात्। 'अकरस्तु स्वयं सर्वं, यदि सम्राडनुग्रहः। तदा न्यायपथेनैव, कुरुते रिपुसूदने'ति स्मृतेः। द्विती याभिप्रायेणेदम्; आद्यश्शमार्थं सन्देशव्याजेन किञ्चित्करं ददाति। सकरोऽपि

---

[१] म० भा०। आश्व० प०। ४। १७, १८॥ पारावारमभिव्याप्येत्यादिश्लोको नोपलभ्यते मुद्रितग्रन्थेषु ॥
[२] (घ)। नास्ति ।
[३] 'स्मृतादावमी' इति पाठः पुस्तकेषु ।
[४] म०। ७। ४-६, ९॥
[५] (क)। नरेन्द्राणामिति।
[६] म०। एषः ।
[७] एक एवेति द्विरुपसर्पिणमिति च पाठः पुस्तकेषु ।
[८] (घ)(ङ)योः। सञ्चयान्।
[९] नास्ति मुद्रितव्यासस्मृतौ।

द्विविधः अधिकृतदण्डादिरनधिकृतदण्डादिः। आद्यस्य [1] न्याये पुनर्न्यायस्तेन कृतो दण्डो [2] न निवर्त्तते, द्वितीयस्य न्यायेऽधिकारो दण्डे नाधिकारः। न्यायस्य पुनर्न्यायोऽपि। यदि हठात्कारेण विरुद्धाना [3] चरति तदा साहसे यथासाहसं धनग्रहण- [4] दण्डोऽसाहसे तत्समीपं गते प्रसादकरमनादाय दिनद्वयं दिनत्रयं वा स्वदर्शनन्न कारयतीति तिरस्कारः सम्राजा [5] करणीयः। तत्प्रजासु तत्कृतं सम्राजाऽनिवर्त्यम्। 'अस्वतन्त्राः प्रजाः सर्व्वाः स्वतन्त्रः पृथिवीपतिरि'ति **नारदीयात्** [6]। अस्याप्यत्रैव तात्पर्य्यं, सम्राडादौ तदसंभवात्। संप्रदायोऽपि तथैवेति [7]।

अमीषां साधारणधर्म्मानाह **मनुः** [8]।

"ब्राह्मणान् पर्य्युपासीत प्रातरुत्थाय पार्थिवः।
त्रैविद्यविद्वान् विदुषस्तिष्ठेत्तेषाञ्च शासने ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी हि सततं [9] रक्षोभिरभिपूज्यते ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥
बहवोऽविनयान्नष्टा राजानस्सपरिच्छदाः।
वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे ॥
वेणो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः।
सुदाः पैजवनश्चैव [10] सुमुखो निमिरेव [11] च ॥
पृथुस्तु विनयाद्राज्यं प्राप्नुयान्मनुरेव [12] च।
कुवेरस्तु धनैश्वर्यं ब्राह्मण्यञ्चैव गाधिजः" ॥

---

[1] (क)। आद्यस्य पुनर्न्यायः। [2] (घ)। कृतदण्डो न निवर्त्तते।
[3] (ख) (घ) (ङ) पुस्तकेषु। विरुद्धमिति।
[4] (ख)। धनग्रहणमिति। [5] (घ)। साम्राज्ञा।
[6] ना० स्मृ०। ऋणादान प्र०। ३३।
[7] (क) (ग) योः। 'तथैवेतीति' इति।
[8] म०। ७। ३७–४२। [9] रक्षाभिरिति पुस्तकेषु।
[10] सुन्दापैर्जवनश्चैवेति (क) (ख) (ग) (ङ) पुस्तकेषु। (घ)। सुन्दाः।
[11] (क) (ग) (ङ) पुस्तकेषु। नेमिः ॥ (ख)। नैमिः ॥ मानवे। निमिः।
[12] (घ) (ङ) योः। प्राप्तवान् इति।

**याज्ञवल्क्यः ।**

"अन्यायेन नृपो राष्ट्रात्स्वकोशं[१] योऽभिवर्द्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः" ॥[२]

विनयः सुनीतिः सुशीलमिति केचित् ॥ **मनुः**[३] ।

"त्रैविद्येभ्यस्त्रयीं विद्या[४]द्दण्डनीतिञ्च शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च[५] लोकतः" ॥

त्रयीमृग्यजुस्सामवेदान् आन्वीक्षिकीं तर्क्कविद्यां **आत्मविद्यां** वेदान्तम्; वार्त्ता कृषिवाणिज्यादि शिक्षेतेत्यर्थः ।

"[६]इन्द्रियाणाञ्जयेद्योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे[७] स्थापयितुं प्रजाः" ॥

इन्द्रियाणां दुष्टविकारञ्जयेदित्यर्थः ॥

"दश कामसमुच्छ्राणि[८] तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत्" ॥

अष्टादश व्यसनानि त्यजेत् । तद्धेतुमाह ।

"कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वि[९]युज्यतेऽर्थकामाभ्यां क्रोधजेष्वात्मनैव तु ॥
मृगयाक्षा[१०] दिवास्वप्नः परिवादस्त्रियो मदः ।
तौर्य्यत्रिकं वृथाटचा च कामजो दशको गणः ।

---

[१] (घ)(ङ)योः । स्वकांशं ।
[२] या० । १ । ३४० ।
[३] म० । ७ । ४३–४८ ।
[४] (घ)(ङ)योर्मनावपि । विद्यां ।
[५] (ङ) । वार्त्तारम्भाश्चेति ।
[६] मानवे तु 'इन्द्रियाणाञ्जये' इति पाठ उपलभ्यते ।
[७] (ख)(ङ)योः । रणे इति ।
[८] म० । समुत्थानि ।
[९] (ङ) । विसृज्यते । म० । अर्थधर्माभ्यां ।
[१०] मृगयाक्ष इति मेधातिथिः ।

पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डञ्च[1] पारुष्यं क्रोधजोपि गणो[1] ऽष्टकः ॥
व्यसनस्य च मृत्योश्च कष्टं व्यसनमुच्यते ।
व्यसन्यधोऽधो व्रजति स्वर्य्यात्यव्यसनी मृतः" ॥[2]

तौर्य्यत्रिकं नृत्यगीतवाद्यं, वृथाटचा विफलभ्रमणं, साहसं वधादि, वाग्दण्डञ्च[3] वाक्पारुष्यं दण्डपारुष्यं, एष्वष्टादशव्यसनेष्वतिप्रसक्तिरेव निषिद्धा, न तु तत्संबन्ध एव राज्ञस्तद्विधेः ॥ **याज्ञवल्क्यः**[4] ।

"[5]पटे ताम्रपदे वापि[6] स्वमुद्रोपरिचिन्हितम् ।
अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः ।
अलब्धमीहेद्धर्म्मेण लब्धं यत्नेन पालयेत् ।
पालितं वर्द्धयेन्नित्यं[7] वृद्धं पात्रेषु निःक्षिपेत् ॥
स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यान्तथैव च ।
विनीतस्त्वर्थवार्त्तायां त्रय्याञ्चैव[8] नराधिपः" ॥

**मनुः**[9] ।

"अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥
एतच्चतुर्व्विधं विद्यात्पुरुषार्थप्रयोजनम् ।
अस्य सम्यगनुष्ठानं नित्यं कुर्य्यादतन्द्रितः[10] ॥"

स्वनामाङ्कितमुद्रया स्वपत्रमात्रमङ्कयेत् । धनागमसमीहा धनपालनवर्द्धनानि कुर्य्यात्, पात्रेषु विश्वासपात्रेषु निःक्षिपेत् अतन्द्रितः[11] निरालसः, धर्म्मेणेति

---

[1] (क) (ख) (ग) पुस्तकेषु। गुणो० इति॥ म०। वाग्दण्डजं च पारुष्यमिति पाठः । [2] म० । ७ । ५३ ।

[3] (घ) (ङ)योः। वाग्दण्डञ्च पारुष्यं ।

[4] या० । १ । ३१९, ३१७, ३११ ।

[5] (घ) (ङ)योः । पट्टे । [6] या० । पटे वा ताम्रपत्रे वा इति ।

[7] या० । वर्धयेन्नीत्या इति ।

[8] (क) (ग) । तय्याञ्चैव ॥ (ख) (घ) (ङ)पुस्तकेषु। सदा चैव ॥

[9] म० । ७ । ९९,१०० ।

[10] म०। अस्य नित्यमनुष्ठानं सम्यगिति॥ (घ) (ङ)योः अतन्त्रितः ॥

[11] (ङ) । अतन्त्रितः निरालस्यः ।

सर्व्वत्रान्वयः। "धर्म्मेण दण्डविजयकरादिना वृद्धं भोगाद्युर्व्वरितं धनन्दानाय भुक्तये[१]" इति **स्मृतेः**। "वृद्धं [२]व्यावहारिकधना"दिति **नीतिकल्पतरुः** ॥

"अध्यास्योद्वाहयेद्भार्य्यां[३] सवर्णां लक्षणान्विताम्।
कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥
कन्यानां संप्रदानञ्च कुमाराणाञ्च रक्षणम्[४]।
राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत्[५]" ॥

सवर्णां सजातीयां, लक्षणान्वितां धर्म्मशास्त्रोक्तलक्षणान्वितां, रूपगुणान्वितां सामुद्रिकलक्षणलक्षितां, कन्यामुद्वहेत्, कन्यादानं कुमाररक्षणं कार्य्यं, राष्ट्रसंग्रहे इदमवश्यमेव[६] कार्य्यमित्यर्थः।

"स्वयं गृहीतराष्ट्रो हि पार्थिवः सुखमेधते[७]।"
पुत्रादितो दुःखसन्देहात् स्वयं गृहीतराज्यो भूयादित्याशयः ॥

"ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।
सर्व्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम्[८] ॥"

अत्र क्षत्रियपदं राजपरम् उपनयनादिसंस्कारवता परिरक्षणं कार्य्यमिति प्राशस्त्यपरं, "बालोपि नावमन्तव्य[९]" इति **मनोरेव** प्रागुक्तेः ॥

तद्यथा।

उत्थाय पश्चिमे यामे कृतशौचः समाहितः।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत् स शुभां सभाम्[१०] ॥

सभाकर्त्तव्यकलापाः "व्यवहारान्नृपः पश्येदि"[११] त्यादिना धर्म्मशास्त्रनिबन्धे विस्तारिताः ॥

"व्यायाम्याप्लुत्य मध्यान्हे भोक्तुमन्तःपुरं विशेत्।
तत्रात्मभूतैः कालज्ञैराहार्य्यपरिचारकैः।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्व्विषापहैः[१२] ॥"

---

[१] (क)। **भक्तये इति।** [२] (ङ)। **व्यवहारिक० इत्यशुद्धः पाठः।**
[३] **म०।७।७७। तदध्यास्योद्वहेद्भार्यामिति म०। अध्याप्योद्वहयेद्भार्यां। (ङ)।**
[४] **म०।७।१५२।** [५] **म०।७।११३।**
[६] **०मेककार्यमित्यर्थः। (ङ)।** [७] **म०।७।११३।**
[८] **म०।७।२।** [९] **म०।७।९।**
[१०] **म०।७।१४५।** [११] **या०।२।१।**
[१२] **म०।७।२१६,२१७। म०। अहार्यैरिति।**

**महाभारते ।**

"इन्द्रियाणि तु सर्व्वाणि वाजिवत्परिपालयेत्[1] ।
हितायैव भविष्यन्ति रक्षितं द्रविणं यथा ॥
आत्मा रक्ष्यस्तु सततं भोजनादिषु भारत ।
विहाराहारकाले तु माल्यशय्यासनेषु च[2] ॥"

**हारीतः ।**

"प्राप्तकालस्तु नीतिज्ञ उत्तिष्ठेत्कालसर्प्पवत् ।
[3]महत्यल्पोप्युपायज्ञस्समये भवति क्षमः ॥
अविद्वानपि भूपालो विद्यावृद्धोपसेवया
परां सिद्धिमवाप्नोति जलासन्नतरुर्य्यथा
सत्यैश्वर्य्यं तथा त्यागो नृपस्यैते महागुणाः
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम्[4] ।"

आत्मभूतैः प्रियैः, कालज्ञैश्चतुरैः, सर्व्वोपायैरात्मा रक्ष्य इति वर्त्तुलार्थः ॥ प्रधानतो राज्ञ एत ऐहिकस्वार्थाः। न च प्रजारक्षणस्यादृष्टार्थकत्वादिदमुक्तमयुक्तम्; अरक्षणे प्रजाक्षैण्यविरागभागधेयभङ्गप्रसङ्गात्, अत्र दृष्टान्तो'वेणो विनष्ट' इति ॥

इति श्रीचण्डेश्वरकृतो राजनिरूपणतरङ्गः ॥

---

[1] म० भा० । परिपालय । आश्व० प० । ६ । १३–१९ ।
[2] (घ) (ङ) योः। शय्याशनेषु चेति पाठः ।
[3] (ङ) । महानल्पोप्युपायज्ञः ।
[4] नास्ति मुद्रितहारीतधर्मे ।

## **अथामात्यनिरूपणम्** ।। (C. II.)

अमात्यं विना राज्यकार्य्यं न निर्व्वहत्यतोऽत्र प्रथममात्यो निरूप्यते ।।

**मनुः**[१] ।

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान्[१] ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ।।

मौलान् कुलसेवकान्, कुलोद्गतान् कुलीनान् ।।

**याज्ञवल्क्यः**[२] ।

मन्त्रिणस्तु[३] प्रकुर्व्वीत प्राज्ञान्[३] मौलान् स्थिराञ्शुचीन् ।
तैस्सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ।।

प्रथमं मन्त्रिभिः सह मन्त्रयेत् । ततो ब्राह्मणेन, ततः स्वयम् रहसि मन्त्रयेद्विचारयेदित्यर्थः ।।

अमात्यकरणे[४] हेतुमाह **मनुः**[५] ।

सुखेनापि यत्क्रियते[६] तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किञ्च[७] राज्यं महोदयम् ।।

तथा

[८]अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोन्नतम्[९] ।
स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे[१०] नृणाम् ।।

---

[१] म० । ७ । ५४ । म० । कुलोद्भवान् ।
[२] या० । १ । ३१० ।
[३] या० "स मन्त्रिणः" ।। प्रज्ञानिति (क) (ख) (ग) (ङ) पुस्तकपाठः ।
[४] अमात्येत्यारभ्य मनुरित्यन्तः पाठो नास्ति (ङ) पुस्तके ।
[५] म० । ७ । ५५ ।
[६] म० । अपि यत्सुकरं कर्म इति ।
[७] "किमु" । इति मिथिलास्थ-शिवेश्वरशर्म-गृह-प्राप्त-लिखितमानवपुस्तके पाठः । किन्त्विति मनौ ।
[८] म० । ७ । १४१ ।
[९] म० । "कुलोद्गतम्" ।
[१०] क्षणो । (घ) पाठः प्रामादिकः ।

अमात्येषु मुख्यमुक्तलक्षणमेकं[1] मानार्थं पृथगासने स्थापयेत् । अत्रार्थे **व्यासः**[2] ।

स्मृतिस्तत्परमार्थेषु वितर्क्के ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुरुः ॥

मन्त्रिण इत्यार्षत्वादेकवचनम्[3] ॥

**मनुः**[4] ।

तैःसार्द्धं मन्त्रये[5]न्नित्यं सामान्यं सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
सामन्तानाञ्च [6]कार्य्येषु विदध्याच्छिवमात्मनः[7] ॥

सन्धिविग्रहमिति समाहारः, सन्धिविग्रहमित्युपलक्षणम् । पृथक् पृथक् मतमाकलय्य चिरं चिन्तयेत् ॥

[8]सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमम्मन्त्रं राजा षाड्गुण्यसंयुतम्[9] ॥
[10]नित्यं तस्मिन् समाश्वस्तः सर्व्वकार्याणि निःक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत् ॥

पूर्व्वोक्तेन ब्राह्मणेन परमम्मन्त्रं निर्गलितार्थं षाड्गुण्यं राजा मन्त्रयेदित्यन्वयः । "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रय" इति **कोषः**[11] । तद्भावः षाड्गुण्यमित्यर्थः ॥

**महाभारते**[12] ।

मन्त्रिणश्चैव कुर्व्वीथा द्विजान् विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्म्मार्थकुशलानृजून् ॥

---

[1] **मुख्यमुक्तलक्षण० । (ङ) । मुख्यलक्षण० इत्यन्येषु ।**
[2] **अत्र व्यासवचनानि लुप्तव्यासस्मृत्युद्धृतानीति । नैतानि प्रचलितव्यास स्मृतावुपलभ्यन्ते ।**
[3] **कौटिलीये (५ । ३ ॥ ८ । ४ ।) मन्त्रीति प्रधानमन्त्री ।**
[4] **म० । ७ । ५६, ५७ ।**
[5] **म० । 'चिन्तयेत्' ।**
[6] **म० । "समस्तानाम्" ।**
[7] **म० । "हितमात्मनः" । (ङ) । चिरमात्मनः ।**
[8] **म० । ७ । ५८ ।**
[9] **(क) (ग)योः । "संयुतः" ।**
[10] **म० । ७ । ५९ ।**
[11] **अमरः । २ । ८ । १८ ।**
[12] **म० भा० । आश्रम० ॥ ६ ॥ २० । १४ । २१ ।**

अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् ।
दान्तान् कर्म्मसु पुण्यांश्च मुख्यान् कर्म्मसु योजयेत्[1] ॥
तैस्सार्द्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिस्सह ।
समस्तैरपि च व्यस्तैर्व्यपदेशेन[2] केनचित् ॥

उक्तलक्षणान् ब्राह्मणान् मन्त्रेषु योजयेत्, बहुभिः सह न मन्त्रयेत्, अपि मन्त्रयेत्तदा केनचित् व्यपदेशेनेत्यर्थः। लक्षणमुखेनामात्यधर्म्मानाहतुर्**नारदहारीतौ**[3]।

कोऽत्रेत्यहमिति ब्रूयास्सम्यगादेशयेति च ।
आज्ञां न वितथां कुर्य्याद्यथाशक्ति महीपतेः ॥
अल्पेच्छो[4] धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेद्यः स राजवसतिं वसेत् ॥
दूरादेवेक्षणे ह्रासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणः[5] श्लाघ्यः स्मरणं प्रियवस्तुषु ॥
अतथ्यान्यपि[6] तथ्यानि[7] दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्म्मविदो जनाः[8] ॥
नानिवेद्य प्रकुर्व्वीत भर्त्तुः किञ्चिदपि प्रियम् ।
कार्य्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥
स चामात्यः सदा श्रेयान् काकिनीमपि[9] वर्द्धयेत् ।
कोषं प्राहुर्य्यतः प्राणान् ततः प्राणाः स भूपतेः ॥

अल्पेच्छो[10] नातिधनाकांक्षी; छायेवानुगतो मन्त्रादिकार्य्यकाले न तु रहस्यकर्म्मादौ निषेधश्रवणात्; पेशलाः प्रवीणाः, समे निम्नोन्नतानीवेति यथा चित्र-

---

[1] म० भा०। '०पुण्यांश्च पुण्यान् सर्वेषु योजयेः।' इति वङ्गदेशमुद्रितभारते। द्राविडे तु '०सर्वेषु मुख्यान् मुख्येषु योजयेः।' इति।
[2] व्याप्तैर्वापदेशेन। (ङ)। [3] नोपलभ्यन्ते नारदस्मृतौ मुद्रितहारीते च।
[4] (क)। अल्पेच्छः॥ (ख)(ग)(घ)(ङ)पुस्तकेषु। अल्पेक्षः।
[5] गुणश्लाघ्यस्मरणं। (घ)(ङ)योः।
[6] (ङ)। अतथ्यानि च।
[7] (ङ)। निदर्शयति पेशला इत्यशुद्धः पाठः।
[8] (ङ)। चित्रकर्माविदो जना इत्यशुद्धः पाठः।
[9] "यः काकिन्यपि" इति (क)(ख)(ग)(ङ)पुस्तकपाठः सर्वथा ऽशुद्धः॥
[10] (घ)। अल्पेक्षः।

लेखकाः पटादौ[1] लिखनकौशलेन समे निम्नमुन्नतन्दर्शयन्ति तथैव प्रवीणमन्त्रिणश्चातुर्य्येणातथ्यानि अप्रतीर्य्याणि[2] सप्रतीर्य्याणि[3] दर्शयन्ति ।। तथा च यस्य प्रतीकारोत्तरादि नास्ति तस्य तत्संपादयन्तीत्याशयः ।। आपदि प्रियमपृष्टमपि कुर्व्वीतेत्यर्थः, काकिनी वराटकसंख्या, प्राणाः प्राणतुल्याः ।।

अन्यच्च ।

धूर्त्तः स्त्री वा शिशुर्य्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनोत्क्षिप्तः कार्य्याब्धौ स निमज्जति ।।
येषां राज्ञा सह स्यातामुपचयापचयौ ध्रुवम् ।
अमात्या इति तान् राजा नावमन्येत्कदाचन ।।
[4]महीभुजो मदान्धस्य विषमे कार्य्यसागरे ।
[5]स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ।।
मूर्खे नियुज्यमाने तु त्रयो दोषा महीपतेः ।
अयशोऽर्थविनाशश्च नरके पतनन्तथा ।।
प्राज्ञे नियुज्यमाने च सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्ग्यविलासश्च[6] पुष्कलश्च धनागमः ।।

धूर्त्तस्त्रीबालमूर्खा न मन्त्रिणः कार्य्याः, प्राज्ञा एव मन्त्रिणः कार्य्याः। अत्रापि स्वोपचयापचयफलभागिनः प्रथमतो मन्त्रिणः कार्य्याः उक्तदोषगुणश्रवणात् । पुष्कलः सकलः। ननु प्रथमोक्तलक्षणबालस्य कथमत्र निषेधो युक्त इति चेत्सत्यं परन्तु वयोधर्म्मस्य सर्व्वगुणेषु[7] प्राबल्यात्। तेन तत्कृतान्यायशङ्कां निरस्तु[8]मशक्यत्वात्। अतएव **मनुः**[9] ।

मत्तोन्मत्तार्त्ताद्य[10]धीनैर्बालेन स्थविरेण वा ।।

**नारदः**[11] । "यद्बालः कुरुते कार्य्यमि"त्यादि ।।

इति चण्डेश्वरकृतोऽमात्यतरङ्गः ।।

---

[1] (घ)(ङ)योः। पट्टादौ ।
[2] (ङ) । अप्रतीकार्य्याणि ।
[3] (घ) । सप्रतीकार्याणि ।
[4] (घ)(ङ)योः । महीभुजा ।
[5] (क)(ख)(ग)(ङ)पुस्तकेषु । स्थूलतः ।
[6] स्वर्ग० इति सुवचम् ।(घ)(ङ)योः यशोऽस्वर्ग्यविनाशश्चेति सम्यक् पाठः ।।
[7] सर्वगुणेभ्यः । (घ) ।
[8] निरासितु० इति साधीयान् ।
[9] म० । ८ । १६३ ।
मत्तोन्मत्तर्णाद्यधीनैः ।(ङ) ।
[10] अध्यधीनैः । (घ) (म०) ।
[11] ना० । ऋण० प्र० । ३९ ।

## अथ पुरोहितादितरङ्गः ॥ (C. III.)

सर्व्वमङ्गलकारणमतोऽत्र पुरोहितो निरूप्यते ।

**व्यासः**[1] ।

वेदवेदार्थतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो दक्ष एष राजपुरोहितः ॥

इदं पुरोहितस्वरूपम् । **मनुः**[2] ।

पुरोहितञ्च कुर्वीत वृणुयादेव चर्त्विजः[3] ।
तस्य गृह्याणि कर्म्माणि कुर्य्युर्वै तानि कानिचित्[4] ।
यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।
धर्म्मार्थं चैव विप्रेभ्यो दद्याद्भोगान्धनानि च ॥

**याज्ञवल्क्यः**[5] ।

पुरोहितञ्च कुर्वीत दैवज्ञमुदितोदयम् ।
श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव च[5]र्त्विजम् ॥
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ।
भोगांश्च दद्याद्विप्रेभ्यो वस्तूनि विविधानि च ॥
अक्षयोऽयं निधी राज्ञां विप्रेभ्यः प्रतिपादितम्[6] ।
अस्कन्नमव्ययञ्चैव[7] प्रायश्चित्तैरदूषितम् ॥
अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ।
ऋत्विक्पुरोहिताचार्य्यैराशीर्भिरभिवन्दितः ॥

अस्कन्नमन्यत्र[8]पतनाभावः ॥ उक्तपुरोहितादेरर्थधर्म्मयोरविशेषादत्रावसरः ।

---

[1] नोपलभ्यते मुद्रितव्याससमृतौ । [2] म० । ७ । ७८, ७९ ।
[3] चर्त्विजम् । (घ) (ङ)योः ।
[4] म० । तेऽस्य ...... वैतानिकानि च इति ।
[5] या० । १ । ३१३–३१६ । ३३२ । ऋत्विज इति या० पाठः ।
[6] ०राज्ञां यद्विप्रेषूपपादितमिति अपरार्कः ।
[7] या० । अस्कन्नमव्यथं (व्ययं वा) । अस्कन्दनमिति पाठस्त्यक्तव्यश्छन्दो-भङ्गभिया ।
[8] अस्कन्नं क्षरणरहितमिति मिताक्षरा ।

यत्तु यजनादेरदृष्टमेव फलमिति तन्न। "राज्यकामो विजयकामो धनकामः [१]पुष्टया-दिकामो यजेदि"त्यादि दर्शनात्, व्यवहाराच्च। किञ्चाशीर्वादादेरर्थप्रयोजकस्य पृथगुपादानात्। तथा चाह मनुः[२]।

न स्कन्दते न व्यथते न विनश्यति कर्हिचित्।
वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम्॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
प्राधीते शतसाहस्रमनन्तं वेदपारगे॥
पात्रस्य हि विशेषेण श्रद्दधानतयैव च।
अलं[३] वा बहु वा प्रेत्य दानस्यावाप्यते फलम्॥
न तं स्तेना न चामित्रा हरन्ति न च नश्यति।
तस्माद्राज्ञा विधा[४]तव्यो ब्राह्मणेष्वक्षयो निधिः॥

प्राधीते विद्यावति इदं प्रासङ्गिकम्॥

इति चण्डेश्वरकृतो राज[५]पुरोहितादितरङ्गः॥

---

[१] पुत्र्यादिकामो। (ङ)। [२] म०। ७। ८३-८६।
[३] म०। अल्पमिति॥ ०दानस्य फलमश्नुते इति।
[४] म०। निधा०। [५] पुरोहितादितरङ्गः (घ)।

## अथ प्राड्विवाकः ॥ (C. IV.)

**कात्यायनः ।**

यदा कार्य्यवशाद्राजा न पश्येत्कार्य्यनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम्[1] ॥

**स्मृतिः ।**

कुलशीलगुणोपेतः सत्यधर्म्मपरायणः ।
प्रवीणः पेशलो दक्षो धर्म्माध्यक्षो विधीयते ।

धर्म्माध्यक्षो न्यायकारी, अन्यकार्य्यासक्तः स्वयं यदि निर्णेतुमशक्तस्तदा राजा उक्तलक्षणं ब्राह्मणं न्यायकारित्वे नियुञ्ज्या[2]दित्यर्थः ॥

**बृहस्पतिः ।**

राजा कार्य्याणि[3] पश्येत प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः[4] ॥
विवादे पृच्छति प्रश्नं प्रतिप्रश्नन्तथैव च ।
प्रियपूर्वं प्रागवदति प्राड्विवाकस्ततः स्मृतः[4] ॥

पृच्छति विविनक्ति चेति प्राड्विवाकः। "विचारणपर्य्यन्तमेव प्राड्विवाकधर्म्म" इति **पल्लवकारः** । "न्यायाङ्गानि वह्निजलादीनि तान्यग्रतः कृत्वेति स्वरसाद्दण्डादिरपि" इति **लक्ष्मीधरः** । वस्तुतस्तु यथा नृपाज्ञा तथा कुर्य्यादिति व्यवहारोपि तथैव ॥

**हारीतः ।**

यथा शल्यम्भिषक्कार्य्यमुद्धरेन्मन्त्रशक्तितः[5] ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥

---

[1] (ख) (ग) (घ) (ङ) पुस्तकेषु वेदपारगमिति ॥ (ख) (ङ) पुस्तकयोः "शास्त्रपारगमिति पाठान्तरम्" इत्यधिकः पाठः ।
[2] (घ) । °दयमर्थः ।
[3] (ख) (घ) (ङ) पुस्तकेषु राजकार्य्याणि ॥ "राजा" ० इति कल्पतरुकारो लक्ष्मीधरः पठति ॥
[4] अपरार्कस्तु (या० २।३।) एतद् वृद्धबृहस्पतिवचनमित्युदाहरति ।
[5] वीरमित्रोदये "नारदहारीतौ। यथा शल्यं भिषक्कायादुद्धरेद्यत्नयुक्तितः।" इति ।

भिषक् वैद्यः। शल्यमत्र छलम्[1] ॥

**व्यासः** ।

विवादानुगतं दृष्ट्वा ससभ्यस्तु प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥

**मनुः**[2] ।

सोऽस्य[3] कार्य्याणि पश्येत सभ्यैरेव त्रिभिर्वृतः ।

सभ्यत्रयस्यावश्यकत्वमित्यभिप्रायः, सभ्यचतुष्टयादेः प्रतिषेधाभावात् ।

**नारदः**[4] ।

यत्र सभ्यो जनः सर्वस्साध्वेतदिति मन्यते ।
स निःशल्यो विचारः स्यात्सशल्यः स्यादितोऽन्यथा ।

"निर्णयविषयं शल्यमधर्म्मरूपमि"ति **सागरः** । अत्रापि दण्डा[5]द्धनमित्यर्थपरत्वम् ॥

इति चण्डेश्वरकृतोऽत्र प्राड्विवाकतरङ्गः ॥

---

[1] शल्यमत्र लक्षणम्। (ङ) ।
[2] म० । ८ । १० ।
[3] (क) । सौम्यं । म० । संपश्येत् ।
[4] ना० । ३ । १७
[5] दण्डाधन० । (ङ) पुस्तकपाठो ऽशुद्धः ।

## अथ सभ्यनिरूपणम् ॥(C. V.)

सभासु साधुस्सभ्यस्तेन प्रथमं सभा निरूप्यते ॥

हारीतः[1] ।

प्रतिष्ठिताऽप्रतिष्ठिता[2] सुमुद्रिता शासिता सभा[2] ।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥[3]
प्रतिष्ठिता पुरे ग्रामे नाना[3]ग्रामेऽप्रतिष्ठिता ।
मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च शासिता ॥
[4]नृपाधिकृत-सभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥

तथाचायमर्थः। या ग्रामे राजग्रामे परिकल्पितस्थले सभा सा प्रतिष्ठिता, यदा कुत्रापि ग्रामे साऽप्रतिष्ठिता, याध्यक्षप्राड्विवाकाद्यधिष्ठिता सा मुद्रिता, या राज्ञाधिष्ठिता सा शासिता इति पूर्वद्वये चापरद्वयं विशेषणम्। स्मृतिर्द्धर्म्मशास्त्रं स्वपुरुषा[5] वेत्रपाण्यादयः ॥

एषाम्मूर्द्धा नृपोऽङ्गानां मुखञ्चाधिकृतः कृतः ।
बाहू सभ्याः स्मृतिर्हस्तौ जंघे गणकलेखकौ ॥
हेमाग्न्यम्बुदृशौ दृष्टं पादौ स्वपुरुषास्तथा ।
दशानामपि[6] चैतेषां कर्म्म प्रोक्तं पृथक् पृथक् ॥

मूर्द्धा मस्तकः। अधिकृतोधिकारी, दृष्टं शास्त्रेषु ।

---

[1] बृहस्पतिः अपरार्कटीकायाम् (या० । २ । १ ।) ।

[2] या० अप० । अप्रतिष्ठा च। मुद्रिता इति (ख)(घ)(ङ)पुस्तकपाठो युक्तः। तथेत्यपरार्कः ।

[3] या० अप० । चलानाम ।

[4] या० अप० । नृपोधिकृत० ।

[5] स्वपुरुषा वेत्रपाण्यादय इत्यारभ्य हेमाग्न्यम्बुदृशौ दृष्टं पादावित्यन्तः पाठः (घ)(ङ)योर्लेखकप्रमादात्त्रुटितः ।

[6] दासानामपीति पुस्तकेषु ।

वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा ॥
शपथार्थे हिरण्याग्नी[१] अम्बु तृषितक्षुब्धयोः[२] ।
गणको गणयेदर्थं लिखेदर्थं[३] च लेखकः ॥
सकृदुक्तं[४] गृहीतार्थो लघुहस्तो[५] जिताक्षरः ।
सर्वशास्त्रसमालोकी एष शासनलेखकः[६] ॥
प्रत्यर्थिसभ्याऽनयनं साक्षिणाञ्च[७] स्वपूरुषः ।
कुर्य्यादनग्नकौ[८] रक्षेदर्थिप्रत्यर्थिनौ सदा ॥

अनग्नकावजातन्यायौ। एतानि प्रयोजनानि इत्यर्थः ।

**बृहस्पतिः[९] ।**

एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः ।
न्यायान्पश्येत्कृतमतिः सा सभा पुंससम्मता[१०] ॥
लोकवेदाङ्गधर्म्मज्ञास्सप्त पञ्च त्रयोपि वा ।
यत्रोपविष्टा धर्म्मज्ञाः[११] सा यज्ञसदृशी सभा ॥

**मनुः[१२] ।**

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञश्चाधिकृतो[१३] विद्वान् ब्राह्मणस्तां[१४] सभां विदुः ॥

---

[१] (ङ) । "हिरण्याग्नि" इत्यशुद्धः पाठः । [२] अपरार्कः । ०जन्तुषु ।
[३] अपरार्कः । लिखेन्न्यायमिति । [४] (ङ)। सकृदुक्तगृहीतार्थ इति सम्यक् पाठः।
[५] (ख)(ङ)योः। लेखकाग्र्यः ।
[६] (ख)(ङ)योः। एषः प्रोक्तो हि लेखकः॥ (ग)(घ)योः। एषः स्यात्सत्यलेखकः ।
[७] साक्षिणञ्चेति (क)(ख)(ग)(ङ)पुस्तकेषु ॥
[८] अपरार्कमित्रमिश्रोदाहृते बृहस्पतिवचने "कुर्यादलग्नकौ" इति पाठः॥
[९] अपरार्कटीकायाम् (या० । २ । १ ।) ।
[१०] पुंसेत्यार्षः॥ (ख)(घ)(ङ)पुस्तकेषु। पुर० इति॥ अध्वर० इति अपरार्कमित्रमिश्रौ पठतः॥
[११] विप्राग्र्या इत्यपरार्कपाठः। [१२] म० । ८ । ११ ॥
[१३] राज्ञश्च प्रकृतो० इति मेधातिथिसर्वज्ञनारायणाः पठन्ति ॥
[१४] ब्राह्मणस्तामिति मानवटीकाकाराः पठन्ति ॥

सप्त पञ्च त्रयोऽपि चेति तद्गुणवत्पुरुषपरम्। यज्ञसदृशीति। एतदुक्तलक्षणा सभा प्रशस्ता अन्या त्वप्रशस्ता इति भावः।

सभ्यानाह **स**[1] एव।

साधुकर्म्मक्रियायुक्तास्सत्यधर्म्मपरायणाः।
अक्रोधलोभाश्शास्त्रज्ञास्सभ्याः कार्य्या महीभुजा॥

**नारदः**[2]।

राजा तु धार्म्मिकान् सभ्यान् नियुञ्ज्यात्सुपरीक्षितान्।
व्यवहारधुरं वोढुं ये शक्तास्सदुषा[3] (?सद्वृषा) इव॥
धर्म्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः॥

**विष्णुः**[4]।

धर्म्मकर्म्मक्रियोपेताः कार्य्या राज्ञा सभासदः॥

व्यवहारोऽत्र विचारः धर्म्मशास्त्रार्थकुशलाः। मन्वादिधर्म्मशास्त्राणामर्थे कुशला इति **प्राञ्चः**, **नव्यास्तु** अत्र धर्म्मशास्त्रं मुनिप्रणीतधर्म्मप्रयोजकशास्त्रमात्रं तेन मीमांसादेरपि संग्रह इति, मन्मते उभयोरविरोधः प्रथमे आदिपदोपादानात् परन्तु धर्म्मशास्त्रं मन्वादिप्रणीतम्, अर्थशास्त्रं[5] राजनीत्यादि। "यत्र विप्रतिपत्तिः स्याद्धर्म्मशास्त्रार्थशास्त्रयो"रिति **नारद**[6]-वचनात् अर्थशास्त्रस्यापि निर्णायकत्वावगमादिति **लक्ष्मीधरेणात्रैव** व्याख्यातमिति युक्तम्॥

**कात्यायनः**।

अलुब्ध[7]धनवन्तश्च धर्म्मज्ञाः सत्यवादिनः।
सर्वशास्त्रप्रवीणाश्च सभ्याः कार्य्या नृपैर्द्विजाः॥

---

[1] मानवे वचनानुपलम्भात्, यज्ञसदृशीत्यादिसन्दर्भाच्च "स एव" इति बृहस्पतिरित्यनुमीयते॥ [2] ना०। ३। ४, ५।

[3] ना०। 'सद्गवा'। इति॥ 'पुङ्गवा०' इति स्मृतिचन्द्रिकायां पाठः। मदनरत्ने....कल्पतरावपि सद्गवा इत्येव पाठ इति मित्रमिश्रः।

[4] वि०। ३। ७४। "जन्मकर्म्मव्रतोपेताश्च राज्ञा सभासदः कार्याः" इत्यादि विष्णुस्मृतिपाठः।

[5] अर्थस्त्वर्थशास्त्रं। (घ) (ङ)योः।

[6] ना०। १। ३९।

[7] अलुब्ध इति पुस्तकेषु। अलुब्धा० इति अपरार्कः।

तथा ।

एवं शास्त्रमधीयानो[१] न विद्यात्कार्य्यनिर्णयम् ।
तस्माद्दुर्गागमः[२] कार्य्यो विवादेनो[३]त्तमो नृपैः ॥
यत्र विद्वान्न विप्रः स्यात्क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

वृषलस्य धर्म्मशास्त्रज्ञानेऽपि धर्म्मनिर्णयार्थं न नियुञ्जीत । तथाहि ।

अतोऽन्यैर्यत्कृतं कार्य्यमन्यायेन च यत्कृतम्[४] ।
नियुक्तैरपि विज्ञेयं दैवाद्यद्यपि शास्त्रतः ॥
यस्य राज्ञस्तु कुरुते शूद्रो धर्म्मविवेचनम् ।
तस्य सीदति तद्राष्टं पंके गौरिव पश्यतः[५] ॥

**व्यासः**[६] ।

द्विजं विहाय यः पश्येत्कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषञ्च नश्यति[७] ॥

**बृहस्पतिः** ।

देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्ज्जिताः ।
उन्मत्तलुब्धक्रुद्धार्त्ता न प्रष्टव्या विनिर्णये ॥

एतेन वृषलसहायतापि निषिद्धा । तथा स एव ।

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥

शब्दाभिधानं कोषः, गणको ज्योतिर्वित् लेखको व्याकरणकोषवेत्ता द्वावपि योगरूढी उभयत्र[८] तयोरेव कुशलतेत्यर्थः ।

---

१ "एकं शास्त्रमधीते यः" इत्यादि कात्यायनवचनं पठत्यपरार्कः ।
२ "०बह्वागम" इति अपरार्कः ।
३ "विवादेषु" इति अपरार्कः ।
४ "अन्यायेन कृतं तु तत्" इति अपरार्कः ।
५ मानवेऽपि एष श्लोकः । म० । ८ । २१ ।
६ (घ) (ङ)योः । नास्ति ।
७ "द्विजान्" ...... "कोषश्च" इत्यपरार्कः । (घ) (ङ)योः । कोषश्च ।
८ (घ) (ङ)योः । उभय एतयोरेव ।

**नारदः**[1] ।

शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः ।
शुद्धिश्च तेषां धर्म्माद्धि धर्म्ममेव वदेत्ततः ॥

**कात्यायनः** ।

अधर्म्माज्ञां[2] यदा राजा नियुञ्जीत विवादिनाम् ।
विज्ञाप्य नृपतिं सभ्यस्तदाकार्य्यं निवर्त्तयेत् ॥

इयमाज्ञा अधर्म्मायेति[3] नृपतिं विज्ञाप्य[4] निवर्त्तयेत् ।

[5]सभ्येनावश्यकर्त्तव्यं धर्म्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनृणः[6] ॥
न्यायमार्गादपेतन्तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यन्तु प्रियं नात्र न सभ्यः किल्बिषी भवेत् ॥

न चेत्सभ्यः किल्बिषी भवेदित्यर्थः ।

अधर्म्मतः प्रवृत्तन्तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः[7] सनृपा नरकं यान्त्यधोमुखाः ॥
अन्यायतो यियासन्तं[8] येऽनुयान्ति सभासदः ।
तेपि तद्भागिनस्तस्माद्बोधनीयस्स तैर्नृपः ॥

अनुमतिं कुर्वन्तीत्यर्थः ।

**मनुः**[9] ।

राजा भवे[10]दनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्त्तारं निन्दार्हो[11] यत्र निन्द्यते ॥

---

[1] ना० । ३ । ७ ।
[2] (क) (ख) (ग) पुस्तकेषु । अधर्मायेत्यपपाठः ।
[3] "०मधर्म्मायेति" इत्यशुद्धः (क) (ख) (ग) पुस्तकपाठः ॥
[4] (ङ) । विज्ञाप्यानयं ।
[5] (ङ) । सखिनावश्यनिन्द्येते इति पाठः प्रामादिकः ।
[6] ततो नृप इति (क) (ख) (ग) पुस्तकेषु ॥
[7] (घ) । उपेक्ष्यमाणाः । [8] (ङ) । यियासन्तः ।
[9] म० । ८ । १९ । १५ । [10] म० । ० भवत्य ० ।
[11] (घ) । निन्दाहो यत्र विन्द्यते । (ङ) विद्यते । प्रामादिकावेतौ ।

धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः ।
तस्माद्धर्म्मो न हन्तव्यो मा नो धर्म्मो हतोवधीत् ॥

अनेनाः निष्पापः ।

**नारदः**[1] ।

ये तु सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न च ब्रूयुः सर्वे तेऽनृतवादिनः ॥

सभ्याः सभायामधर्म्मं[2] न्यायं बुद्धा मौनिनो न तिष्ठेयुः उक्तदोषात् ॥

इति चण्डेश्वरकृतोऽत्र सभ्यतरङ्गः ॥

---

[1] ना० । ३ । ११ ॥ व्यासस्मृतावप्येतदपरार्कपठनात् (या० २ । ४ ।) ।
[2] (घ) । अधर्मन्यायं ।

## अथ दुर्गनिरूपणम् ॥ (C. VI.)

**मनुः**[1] ।

एकश्शतं योधयति प्राकारस्थो धनुर्द्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥

इति दुर्गस्य प्रयोजनम् ।

**याज्ञवल्क्यमनू**[2] ।

रम्यं पशव्यमाजीव्यं जाङ्गलं देशमाविशेत्[3] ।
तत्र दुर्गाणि कुर्वीत जनकोषात्मगुप्तये ॥
तत्र तत्र च निष्णातानध्यक्षान् कुशलानृजून्[4] ।
प्रकुर्य्यादायकर्म्मा[5]न्तव्ययकर्म्मसु चोद्यतान्[6] ॥

पशव्यं पशूनां हितमाजीव्यं कृषिवाणिज्यादि । जाङ्गलमिति ।

[7]अल्पोदकतृणो यस्तु प्रचारः प्रचुरायतः[8] ।
स ज्ञेयो जाङ्गलो देशो बहुधान्यादिसंयुतः ॥

एतादृशो देशो जाङ्गल इत्यर्थः। तथा च सुजनहिरण्यरजतमणिमुक्ताप्रवालबहुमूल्यरत्नक्षौमवस्त्रा[9]द्याधारकोष-स्वाभिगुप्तये इत्यर्थः ।

धनुर्दुर्गं[10] महीदुर्गं जलदुर्गं[11] वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥

---

[1] म० । ७ । ७४ ।
[2] या० । १ । ३२१–२२ । (म० । ७ । ६९ । ६२ । ८१ ।)
[3] या० । आवसेत् ।
[4] या० । शुचीन् ।
[5] (घ) (ङ)योः । कर्मात्त इति पाठः प्रामादिकः ।
[6] (ख) (ङ)योः । ०प्रचोद्यतान् इति ।
[7] कुल्लूकटीकायाम् । (म० । ७ । ६९ ।) ।
[8] प्रवातः प्रचुरातप इति कुल्लूकपाठः ।
[9] (ख) (ङ)योः । ०क्षौरास्त्रा० इति । (घ) । क्षौरवस्त्रा० ।
[10] म० । ७ । ७० । धन्वदुर्गं महीदुर्गमब्दुर्गमिति पाठः ।
[11] (घ) (ङ)योः । जालञ्च ।

अस्यार्थः—धनुर्दुर्गं[1]मुच्छ्रायवेष्टितं[2] सर्वदिशं[3] पञ्चयोजनं निर्ज्जलं [।] महीदुर्गं दृषदा पक्वेष्टकया वा विस्तारा द्वैगुण्योच्छ्रायेण द्वादशहस्ताद्युन्नतेन[4] संग्रामार्थमुपरिभ्रमणयोग्येन साधारण[5]गवाक्षादियुक्तेन प्राकारेण वेष्टितम् । जलदुर्गमगाधजले[6] चतुर्द्दिशं परिवेष्टितम् । वार्क्षं[7] दुर्गं बहिश्चतुर्दिक्षु योजनमात्रं द्रुमकण्टकलतादिवेष्टितम् । नृदुर्गं चतुर्द्दिगवस्थायि गजाश्वरथयुक्तपदातिपालितम् । गिरिदुर्गं सर्वतः[8] पृष्ठमतिदुरारोहं संकोचैकमार्गोपेतम्मध्ये नदीप्रस्रवणादिप्रयुक्तजलयुक्तं[9] बहुव्रीह्युत्पन्नक्षेत्रवृक्षावृतम् । दुर्गेषु[10] तेषु मध्यादन्यतमं दुर्गमाश्रित्य पुरं विचारयेदित्यर्थः[11] । तथा[12] ।

सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
तेषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥
त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ताश्रयाऽप्सराः ।
त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः[13] ॥

---

[1] म० । धन्वदुर्गमिति ॥ (घ) (ङ)योर्नास्त्येष पाठः ॥

[2] कुल्लूकभट्टस्तु धनुर्दुर्गमिति पठित्वा "मरुवेष्टितं चतुर्दिशं पञ्चयोजनमनुदक" मित्यर्थमाह ॥ मेधातिथिरपि धनुर्दुर्गमिति प्रतीकमुपादाय 'उक्तप्रकारेण द्विगुणोत्सेधेनेष्टकेन शैलेन द्वादशहस्तादूर्ध्वमुद्धतेन तालमूलेन कपिशीर्षचिताग्रेण दृढप्रणाल्या परिकृतं धनुर्दुर्ग" मिति कुल्लूकविपरीतार्थमाह ॥

[3] (घ) (ङ)योः । सर्वतोदिशं ।

[4] हस्तादुन्नतेनेतित्वसन्दिग्धः पाठः ।

[5] कुल्लूकभट्टः सावरण ० इति । राघवानन्दस्तु "साधारणगवाक्षादियुक्तेन" इति व्याचष्टे ॥

[6] कु० । अगाधजलेन ।

[7] (घ) (कु०) वार्क्षदुर्गं । (ङ) । वार्क्षं दुर्गवहिः । समन्ततोऽर्धयोजनमात्रं घनमहावृक्षान्वितं वार्क्षमिति मेधातिथिः । कुल्लूकस्तु योजनमात्रमिति ।

[8] कु० । पर्वतपृष्ठमिति ।

[9] (घ) (ङ)योः । कुल्लूकटीकायामपि । प्रयुक्त इति नास्ति ।

[10] (घ) । दुर्गेष्वेतेषु ।

[11] कु० । विरचयेदिति तु समीचीनम् ।

[12] म० । ७ । ७१–७३ ।

[13] "०नरापराः" इति एवं पूर्वार्द्धे "०श्रयापरा" इति च पञ्चपुस्तकपाठौ प्रामादिकौ ॥

यथा दुर्गाश्रितानेतान् नोपहिंसन्ति शत्रवः ।
तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ॥

तथा च यथा तत्तद्दुर्गाश्रितान् मृगादीन् न हिंसन्ति तथा उक्तदुर्गाश्रितं नृपं शत्रवो न हिंसन्ति इत्यर्थः ।

[1]तत् स्यादायुधसंपन्नं धनधान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्य्यवसेनोदकेन च ॥
तस्य मध्ये सुपर्य्याप्तं कारयेद् गृहमात्मनः ।
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥

भारते[2] ।

पुरञ्च तैः[3] सुगुप्तं स्याद्दृढप्राकारतोरणम् ।
अट्टाट्टालकसंवेधं[4] षट्पथं सर्वतो दिशम् ॥
तस्य दुर्गाणि कार्य्याणि पर्य्याप्तानि बृहन्ति च ।
अदुर्गो विषयः कस्य नारेः परिभवास्पदः[5] ॥
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च ।
अदुर्गो नाश्रयो राजा पोतच्युतमनुष्यवत् ॥
दुर्गं कुर्य्यान्महाखा[6]तमुच्चप्राकारसंयुतम्[5] ।
यो यत्र निपुणः कार्य्ये तञ्च तत्र नियोजयेत्[5] ॥
कार्य्यमुद्दिष्टकर्म्मा[7] योऽशास्त्रतोपि स मुह्यति[5] ।

अथास्य संक्षेपः । आयुधधनधान्यवाहनब्राह्मणशिल्पियन्त्रयवसोदक[8]-पुष्पवाटिकाजलाधारवृक्षयुतं गृहमालयाढचञ्च[9] कारयेत् अट्टाट्टालकाद्यपि दुर्गस्यावश्यकतेति ॥

इति श्रीचण्डेश्वरकृतोऽत्र दुर्गतरङ्गः ॥

---

[1] म० । ७ । ७५–७९ ॥
[2] म० भा० । आश्रम० । ६ । १६–१७ ।
[3] म० भा० (घ)(ङ)योश्च । ते इति ।
[4] म० भा० । ०संवाधं षट्पदम् । इति ।
[5] नास्ति मुद्रितभारते ।
[6] "ख्या०" इति (क)(ख)(ग)(ङ)पुस्तकेषु ।
[7] कर्मसुदृष्टकर्मा योऽशास्त्रतोपि स मुच्यति । (घ)(ङ)योः ।
[8] यवसेदन । (घ)(ङ)योः ।
[9] मालयाख्यं । (ङ) ।

## अथ मन्त्रणा ॥ (C. VII.)

तत्र मन्त्रणादेशमाह **मनुः**[१] ।

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निश्शलाके वा मन्त्रयेद्भूरिभावितः[२] ॥

कालमाह[३] ।

मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो गतकल्मषः[४] ।
चिन्तयेद्धर्म्मकामार्थान् सार्धन्तैरेक एव वा ॥

**महाभारते**[५] ।

सुसंवृतं मन्त्रगृहं स्थलञ्चारुह्य मन्त्रयेः ।
अरण्ये निश्शलाके वा न च रात्रौ कथञ्चन ॥

निःशलाके जनप्रचाररहिते । इयं देशकालव्यवस्था कालसापेक्षे[६] ।

**याज्ञवल्क्यः**[७] ।

मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्य्याद्यथास्य न विदुः कर्म्मणामाफलोदयात् ॥

**मनुः**[८] ।

जडमूकान्धबधिरांस्तैर्य्यग्योनान्वयोतिगान्[९] ।
स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकालेऽपसारयेत् ॥

---

[१] म० । ७ । १४७ ।
[२] म० । अविभावित इति ।
[३] म० । ७ । १५१ ।
[४] म० । विगतक्लमः । इति ।
[५] म० भा० । आश्रम० । ६ । २२ ।
[६] इयं देशकालसापेक्षे । (ङ) ।
[७] या० । १ । ३४२ ।
[८] म० । ७ । १४९–१५० ।
[९] (क) (घ)योः । "०नुयोधिमान्" । (ख) (ग) (ङ)पुस्तकेषु । "०न्वयोधिमान्" । इति च पाठौ प्रामादिकौ ।

भिन्दन्त्यवमता मन्त्रं तैर्य्यग्योना[1]स्तथैव च ।
स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतो[2] भवेत् ।

**महाभारते[3] ।**

वानरः पक्षिणश्चैव ये मनुष्यानुसारिणः[4] ।
सर्वे[5] मन्त्रगृहे वार्य्या ये चापि जडपङ्गवः ॥
मन्त्रभेदे हि ये दोषा[6] भवन्ति पृथिवीक्षिताम् ।
न ते शक्याः समाधातुं कथञ्चिदिति मे मतिः ॥

एते जडादयो मन्त्रे त्याज्याः यत[7] एते स्वभावतः पापा अवमानिताः सन्तो मन्त्रभेदका एवेत्यर्थः ।

**मनुः[8] ।**

यस्य मन्त्रन्न जानन्ति समागम्य[9] पृथग्जनाः ।
स कृत्स्नां पृथिवीं भुङ्क्ते कोषहीनोऽपि पार्थिवः ॥

**नीतौ ।**

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तस्य वार्त्तया ।
इत्यात्मना[10] द्वितीयेन मन्त्रः कार्य्यो महीभुजा ॥

षट्कर्ण इति प्रभोर्द्वौ कर्णौ मन्त्रिणां द्वौ कर्णौ तद्भिन्नकर्णद्वयपतनान्मन्त्रभेद इत्यर्थः ।

**राजनीतौ[11] ।**

संरक्षेन्मन्त्रबीजन्तु तद्बीजं हि महीभुजाम् ।
तस्मिन् भिन्ने ध्रुवो भेदो गुप्ते गुप्तिरनुत्तमा ॥

---

[1] ०योनः । इति (क) (ख) (ग) (ङ) पुस्तकेषु ।
[2] (ङ) । तत्रानृतो भवेदित्यशुद्धः पाठः ।
[3] म० भा० । आश्रम० । ६ । २३–२४ ।
[4] म० भा० । वानरा इति । मनुष्यानुकारिणः इति च ।
[5] (ङ) । सर्वमन्त्रगृहे । म० भा० । वर्ज्या ।
[6] (ङ) । भेदाः ।
[7] (ङ) । य एते ।
[8] म० । ७ । १४८ ।
[9] (घ) (ङ) योः । समगत्य ।
[10] (घ) (ङ) योः । आत्मनः ।
[11] का० । १२ । ३३ ।

मन्त्रमाह[१]।

सहायास्साधनोपाया विभागो देशकालयोः।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र उच्यते ॥

सहाया मन्त्रिणः। साधनोपायास्तर्क्कादयः। देशकालविभागावुक्तौ, यदेयं विपत्तिस्तदासौ प्रतीकार इति पञ्चाङ्गो मन्त्रः। अस्य प्रकारः।

[२]अनुतिष्ठेत्समारब्धमनारब्धं प्रयोजयेत्।
प्रचारयेन्मन्त्रविदः कार्य्यद्वारेष्वनेकधा ॥
यत्र तच्चेतसां साम्यं तेन[३] साधु समुत्पतेत्।
यत्र मन्त्रिमनःसाम्यं तत्र[४] चेतो न शंकते ॥
यत्र सन्तो न निन्दन्ति तं[५] परीयाच्चिकीर्षितम्।
धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयं भूयो विचारयेत् ॥

कार्य्यद्वारेषु मन्त्रबहिःस्थलेषु मन्त्रविदः स्वमन्त्रिभिन्नान्[६]। अनेकधा अनियमितप्रकारेण प्रचारयेत्। तथा चान्योपदेशेन मन्त्रसन्देहो निरसनीयोऽन्यमन्त्रित इति। एवं स्वमन्त्रिमतसाम्ये ब्राह्मणानुमतं परीयात् एवं निर्गलितार्थमपि स्वयं बहु विचारयेत्। पुनः तत्रैव[७]।

तथा वर्त्तेत नीतिज्ञो यथा स्वार्थन्न पीडयेत्।
मन्त्रिणः स्वार्थतात्पर्य्याद्दीर्घमिच्छन्ति विग्रहम् ॥
मन्त्रिणां[८] भोग्यतामेति दीर्घकार्य्याकुलो नृपः।
आवर्त्तयेन्मुहुर्म्मन्त्र[९]म्पूरयेच्च प्रयत्नवान्[१०] ॥
प्रयत्नेनाधृतो[११] मन्त्रः प्रचलन्नग्निवद्दहेत्।

---

[१] कामन्दकः। १२। ३६। [२] कामन्दकः। १२। ३७–४०।

[३] तेषु। इति गणपतिशास्त्रिणा मुद्रितेऽनन्तशयनीये कामन्दकीये। मैथिल-प्राचीन-का०-पुस्तके (१४७६ शाकाङ्किते) "तेन" इति।

[४] का०। यत्र। [५] का०। तत्।

[६] "इदं कार्यमुपस्थितं तत्र किमाहुर्भवन्त इति कार्योपायेषु प्रवर्त्तये"दिति शंकरार्यः कामन्दकटीकाकारः। [७] का०। १२। ४०-४२। ४६।

[८] तेषां च। इत्यनन्तशयनीय-का०। मन्त्रिणामिति मैथिल-का०-पुस्तके।

[९] मन्त्रान् कारयेच्च (घ)(ङ)योः।

[१०] धारयेच्च प्रयत्नतः। इति का०।

[११] अप्रयत्नधृत इति का०।

यदा दीर्घकार्य्याकुलःस्यात्तदाऽस्मत्स्वार्थदः स्यादित्यभिप्रायः। अग्निवदिति यथाग्निः प्रचलन् दहेत्तथैव मन्त्रोऽपि।

[1]अप्यात्म[2]सन्ततेर्म्मन्त्रं संरक्षेत्तत्परस्तु सन्।
अरक्ष्यमाणमन्त्रं[3] हि भिन्दन्त्यात्मपरम्पराः॥

आत्मपरम्परा आत्मीयपरम्पराः। य इष्टस्तस्यापि कोऽपीष्ट इत्यर्थः।

मनः[4] प्रसादबुद्धी[5] च तथा कारणपाटवम्[6]।
सहायोत्थानसम्पच्च कार्य्याणां[7] सिद्धिलक्षणम्॥
मनोऽप्रसादो ऽसत्यञ्च[8] सुप्तप्रलपितानि च।
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्योऽवमतास्तथा॥

प्रसादः प्रसन्नता। बुद्धिर्य्यथार्थस्वमतपरमतानुसारिणी, कारणपाटवं कारण-सम्यक्त्वम्, सहायोत्थानं प्रबलसाहित्यं, सम्पद्धनमेभिः कार्य्यसिद्धिः, अप्र[9]सादादि-पञ्चासिद्धिकारणं तथाचोक्तमन्त्रेणासाध्यमपि साध्यं, स कृत्स्ना'मिति **मनो**रभिधा-नात् तथा चामन्त्र[10]मन्त्रिभेदे स्वप्रमादेषु सत्स्वर्थहानिरिति प्रकरणार्थः॥

इति चण्डेश्वरकृतोऽत्र मन्त्रणातरङ्गः॥

---

[1] का०। १२। ४५। [2] आप्ताप्त०। इति का०।
[3] अरक्ष्यमाणं। (घ)(ङ)योः। कामन्दकीये च॥ भिनत्त्यात्मपरंपरा। (घ)(ङ)योः। कामन्दकीये च।
[4] का०। १२। ४२। ४६।
[5] "०प्रसादः श्रद्धा वाक्" इति मै० का०। "प्रसादः श्रद्धा च" इति अ० का०। [6] करणपाटवम् इति का०।
[7] अ० का०। "कर्मणां"॥ मै० का०। "कार्य्याणां"।
[8] का०। मदः प्रमादः कामश्च इति।
[9] अप्रसादादि। (घ)(ङ)योः।
[10] मन्त्रभेदेस्वप्रसादेषु। (घ)(ङ)योः।

## अथ कोषनिरूपणम् ॥ (C. VIII.)

**नीतौ**[1] ।

बह्वादानोऽल्पनिःस्रावः ख्यातः[2] पूजितदैवतः ।
ईप्सितद्रव्यसंपूर्णो हृद्यः[3] स्वाप्तैरधिष्ठितः ॥
मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः ।
धर्म्मार्ज्जितो व्ययसहः कोषः कोषज्ञसम्मतः ॥

आदानमत्र निःक्षेपः, निःस्रावो निष्कासनं, स्वाप्तैरतिप्रत्यायितैरधिष्ठितो रक्षितः, पितृपैतामहमुचितं यत्रेति समासः, धर्म्मार्ज्जितो राज्ञः प्रजापालनं धर्म्मस्तेनार्ज्जितः, आपदि व्ययेऽपि नाकुलः । ननु प्रजापालनमदृष्टफलजनकं कथं तेनार्ज्जितमिति चेन्न, प्रजापालनस्यापि परम्परयार्थनिमित्तत्वात्, धर्म्माद् वृद्धिरित्यन्ये ।

[4]धर्म्महेतोस्तथार्थाय भृत्यानां भरणाय च ।
आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा ॥

[5]आपदर्थमिति धनेन विपत्तिप्रतीकार इत्याशयः, संरक्ष्य इति सर्वत्रान्वयः। अत्रार्थे **मनुः**[6] ।

आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥

आपदर्थं[7] स्वीयापदर्थमात्मानमित्युपसंहारात् अत्र धनमित्युपलक्षणं 'सर्वत[8] आत्मानं गोपायित' इति **श्रुतेः** ।

---

[1] कामन्दकः । ४ । ६०–६१ ।
[2] "खातः" । इति साधीयान् कोषस्य नितरां गोपनीयत्वात् ।
[3] "भृत्यैः" । इति कामन्दकपाठान्तरम् ।
[4] का० । ४ । ६२ ।
[5] आपदर्थंधनेन । (घ) (ङ)योः ।
[6] म० । ७ । २१३ ।
[7] आपदर्थमिति । (घ) (ङ)योः ।
[8] सर्वत्र । (ङ) ।

[1]क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥

इदं स्वरक्षाप्रकारान्तराभावे ॥

**याज्ञवल्क्यः**[2] ।

हिरण्यं व्यापृतानीतं भाण्डागारेषु निःक्षिपेत् ॥

व्यापृतानीतं नियुक्तैरानीतं कोषस्य भाण्डागारादयो भेदाः अत्र बहुवचननिर्द्देशात्। तदाह **राजनीतौ महाभारते**[3] च ॥

कोषस्य संचये[4] यत्नं कुर्वीथा न्यायतः सदा ।
विविधस्य महाराज विपरीतं विपर्य्ययात्[5] ॥

**नीतौ**[6] ॥

संवर्द्धयेत्सदा कोषमाप्तैस्तज्ज्ञैरधिष्ठितम् ।
काले चास्य व्ययं कुर्य्यात्त्रिवर्गपरिवृद्धये[7] ॥

काले आवश्यके, तज्ज्ञैः कोषकर्म्मप्रवीणैः 'आप्तैरतीष्टसम्बन्धिभिस्तज्ज्ञैस्तत्कर्म्मज्ञैश्चे'ति **सागरः** । 'तज्ज्ञैरिष्टै'रिति **पल्लवः** । तथा च धनार्ज्जनं कोषसंचयश्च त्रिवर्गहेतुरिति। 'धनमर्ज्जय काकुत्स्थ धनमूलमिदं जगदि'त्याद्युक्तेः ॥

इति श्रीचण्डेश्वरकृतः कोषतरङ्गः ।

---

[1] म० । ७। २१२ ।
[2] या० । १ । ३२८ ।
[3] म० भा० । आश्रम० । ६ । ४० ।
[4] म० भा० । निचये ।
[5] म० भा । विवर्जयेः ।
[6] कामन्दकः । ५ । ८६ ।
[7] "प्रतिपत्तये" । इति अ० का० ॥ "परिवृद्धये" इति मै० का० ।

## अथ बलनिरूपणम् ॥ (C. IX.)

मनुः[१] ।

बलस्य स्वामिनश्चैव स्थितिः कार्य्यार्थसिद्धये ।

बलमत्र षडात्मकं स्वामिपदस्वरसात् । **भारते**[२]

यात्राङ्गच्छेद्बलैर्युक्तो राजा षड्भिः परन्तप ।
युक्तश्च देशकालाभ्यां तथा[३] बलगुणैर्नृपः ॥
हृष्टपुष्टबलो गच्छेद्राजा वृद्धचुदये रतः ।
[४]आहूतश्चाप्यथो यायादनृतावपि पार्थिवः[५] ॥

बलगुणैरित्यत्र बलं त्रिविधशक्त्यात्मकं, बलं शक्तिमात्रं तस्याः प्रथमत उपयुक्तत्वात् **इत्यन्ये** । गुणा अत्र सन्ध्यादयः शरशिक्षादयोऽपि, दण्डिनीत्यादय, इति **गुरवः** । अनृतावपि वक्ष्यमाणसंग्रामसमयभिन्ने, षड्भिर्हस्त्यश्वरथपदातिसेना-सैन्यात्मकैः[६] शक्तिस्त्रिविधा प्रभावजा उत्साहजा मन्त्रजा एतास्वपि मन्त्रजा बलवती तदाह **कामन्दकः**[७] ।

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते ।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा[८] ॥
अशिक्षितनयः सिंहो हन्तीभं यौवनं[९] बलात् ।
तञ्च वीरो[१०] नरस्तेषां शतानि मतिमान् जयेत् ॥

---

[१] म० । ७ । १६७ ।
[२] म० भा० । आश्रम० । ८ । १२-१३ ।
[३] म० भा० । बलैरात्मगुणैस्तथा ।
[४] म० भा० । अकृश० ।
[५] म० भा० । पाण्डव ।
[६] ०सेना-सेनान्यात्मकैरित्युचितम् ॥ कामन्दकीये तु 'षडङ्गं मन्त्रकोशाभ्यां पदात्यश्वरथद्विपैः' (का० । १९ । २४) । (ङ) । ०पादात० । (घ) (ङ) सेनात्मकैः ।
[७] का० । १२ । ७-८ । १०-११ ।
[८] जितो देवपुरोधसेति पौराणिकी कथा शंकरार्यटीकायां द्रष्टव्या ।
[९] का० । केवलं ।
[१०] का० । धीरः ।

शक्याशक्यपरिच्छेदं कुर्य्याद् बुद्धया प्रसन्नया ।
केवलं दण्डभङ्गाय दण्डिनः शैलताडनम्[1] ॥
उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पतेत् ।
पश्चात्तापाय भवति विक्रमैकरसज्ञता ॥

**मनु**[2]**:** ।

कृत्वा विधानं मूले च यात्रिकञ्च यथाविधि ।
उपगृह्यास्पदञ्चैव चारान् सम्यग् विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधञ्च बलं स्वकम् ।
साम्परायिककल्पेन यायादरिपुरं शनैः ॥

मूले दुर्गराष्ट्ररूपे, विधानं पार्ष्णिग्राहसंविधानं, यात्रिकं यात्रोपयुक्तं वाहनादि आस्पदं शत्रुदेशावस्थानायान्नादि,[3] चारान् शत्रुदेशमार्गमन्त्रविदस्तत्पक्षकापटिकादीन् साम्परायिककल्पेन सांग्रामिककल्पेन ।

**भारते**[4] ।

प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥
उत्साहप्रभुशक्तिभ्यां मित्रशक्त्या[5] च भारत ।
उपपन्नो नृपो यायाद्विपरीतमतोऽन्यथा[6] ॥

षड्विधमपि चतुर्विधं **तत्रैव** ।

आददीत बलं राजा मौलं मित्रबलं तथा ।
सदा अरिबलञ्चैव तथा श्रेणीबलञ्च यत्[7] ॥
तत्र मित्रबलं राजन् मौलञ्चैव विशिष्यते ।
श्रेणीबलं भृतञ्चैव तुल्यमेवेति[8] मे मतिः ।
[9]यथाचारबलञ्चैव परस्परसमं नृप ॥

---

[1] ०दन्तभङ्गाय दन्तिनः० इति (क) (ग) (घ) पुस्तकेषु, (ङ) । दण्डिनः । कामन्दकीये च । [2] म० । ७ । १८४-८५ ।
[3] (घ) (ङ)योः । अन्नम् । [4] म० भा० । आश्रम० । ८ । ५-९ ।
[5] म० भा० । मन्त्र० । [6] म० भा० । विपरीतञ्च वर्ज्जयेत् इति ।
[7] म० भा० । अटवीबलं भृतं चैव तथा श्रेणीबलं प्रभो इति ।
[8] म० भा० । तुल्ये एवेति । [9] म० भा० । तथा । इति ।

मौलं पितृपितामहादिक्रमागतम्, अरिबलं[1] शत्रुं विहायागतम्। श्रेणीबलं साहित्यार्थमागतम्। तथा च मौलबलं मित्रबलञ्च विश्वसनीयमतो विशिष्यते, श्रेणीबलन्तु भृतकवत् यथा भृतकस्य भरणमेव निमित्तं तेन प्राणसंशयेऽपसरणसंभावना तथा श्रेणीबलस्य साहित्यनिमित्तादपसरणसंभावना। अयमाशयः अरिबलस्य ग्रहण-मरिन्यूनीकरणाय न तु तत्र विश्वासः, पञ्चमे चारबले उभयसम्बन्धादविश्वास-स्तथैवेत्यर्थः। अतएव **मनुः**[2]।

शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत्।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः॥

गतप्रत्यागते एकदा तिरस्कारादिना बहिःकृते पुनरागते कष्टतर इति तेन कृतं वैरिनिर्य्यातनं अप्रतीकार्य्यमेवेति भावः। **मनुः**[3]।

मार्गशीर्षे शुभे मासि यायाद्यात्राम्महीपतिः।
फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम्॥
अन्येष्वपि तु कालेषु यदा पश्येद् ध्रुवं जयम्।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः॥

मार्गशीर्षे अग्रहणे स्वेच्छागमनमुक्तमिदं नाह्वानेन गमनादौ तदा गमने प्रत्यवायप्रसङ्गात्। संक्षिप्याह **याज्ञवल्क्यः**[4]।

यदा सम्यग्गुणोपेतं[5] परराष्ट्रं तदा व्रजेत्॥

इदं पूर्वकृत्यमथ संग्रामकृत्यमाह **मनुः**[6]।

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा।
वराहमकराभ्यां वा सूच्या वा गरुडेन वा॥
यतश्च भयमाशंकेत्ततो विस्तारयेद्बलम्।
पद्मेन चैव व्यूहेन निविशेत तदा[7] स्वयम्॥
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्।
यतश्च भयमाशंकेत्प्राचीं तां कल्पयेद्दिशम्॥
गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः।
स्थाने युद्धे च कुशलानभीरूनविकारिणः॥

---

[1] **अरिबलं शत्रुं विहायागतमिति पाठः (घ)(ङ)योर्नास्ति।**
[2] **म०। ७। १८६।** [3] **म०। ७। १८२-१८३।**
[4] **या०। १। ३४८।** [5] **या०। सम्यगुणोपेतं।**
[6] **म०। ७। १८७-९१।** [7] **म०। "सदा"। इति। (घ) सदा।**

संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूह्य व्यूहेन योधयेत् ॥

दण्डशकटवराहमकरसूचीगरुडपद्मवज्राकारा व्यूहाः, व्यूहरचना तु व्यूहमध्ये पद्मव्यूहस्थो राजा अग्रे बलाध्यक्षः व्यूहपश्चात्सेनानीति[1] तत्पार्श्वयोर्हस्तिनः तत्समीपे व्यूहमध्येऽश्वाः। तत्समीपे व्यूहमध्ये पदातयः। व्यूहस्वरूपं सर्वतो भये सति समविन्यासो दण्डव्यूहः, पृष्ठतो भये सति सूच्याकाराग्रः शकटव्यूहः, पार्श्वतो भये सति सूक्ष्ममुखः पश्चाद्भागः पृथुमध्यो वराहस्तथा एष एव पृथुतरमध्यो गरुडः, वराहविपर्य्ययेण मकरः पश्चादग्रे[2] च भये सति पिपीलिकापंक्तिरिव शीघ्रप्रवीरपुरुषमुखः सूचीव्यूहस्सोग्रे भये सति पद्माकारः पद्मव्यूहः, वज्राकारो वज्रव्यूहः, इमौ सर्वसाधारणौ एतैर्गच्छेदित्यर्थः अत्र यद्दिशो भयं सैव पूर्वा, बलविस्तारोपि तत्रैव। गुल्मान्सैन्यान्तर्गतसैन्यसमूहान्, कृतसंज्ञान् भेरीपटहादिभेदेन कृतसंकेतान्, स्थानेऽवस्थाने[3] अल्पानेकत्रीकृत्य[4] बहून् यथेष्टं योधयेत् ।

युद्धक्रममाह[5] ।

स्यन्दनाश्वैस्समे युद्धचेदनूपे[6] नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥

घोटकानाह[7] ।

कुरुक्षेत्रांश्च मत्स्यांश्च पाञ्चालाञ्छूरसेनजान्[8] ।
दीर्घाँल्लघूंश्चैव नरानग्रानीकेषु योधयेत्[9] ॥

'कुरुक्षेत्राद्युपलक्षणमन्यानपी'ति **श्रीकरः** ।

**भारते**[10] ।

अथो[11]पयायाच्छकटं वज्रं पद्मञ्च पार्थिवः ।
उशना वेद यच्छास्त्रं तत्रैतद्विदितं[12] विभो ॥

---

[1] इति। नास्ति (घ) पुस्तके । [2] कु० । अग्रे पश्चाच्चोभयत्र भये सति।
[3] (ङ) । अवस्थाने इति नास्ति। [4] (घ) (ङ)योः । एकीकृत्य ।
[5] म० । ७ । १९२। [6] (ङ) । अनपे इत्यशुद्धः पाठः ।
[7] म० । ७ । १९३ ॥ (घ) (ङ)योः कुल्लूकटीकायाञ्च। "योधानाह" इति पाठः । [8] सूरसेन ० इति (क) (ख) (ग)पुस्तकेषु ।
[9] म० । योजयेत् । [10] म० भा० । आश्रम ० । ८ । १५–१८ ।
[11] म० भा० । 'अथोपपत्या' ...... 'भारत' ।
[12] म० भा० । विहितमिति ।

वारयित्वा[१] परबलं कृत्वा स्वबलदर्शनम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥
बलं प्रसादयेद्राजा निक्षिपेद्बलिनो बलान्[२] ।
कृत्वा[३] स्वविषयं तत्र[४] सामादिभिरुपक्रमेत् ॥
सर्वथैव महाराज शरीरं धारयेदिह ॥

**मनुः**[५] ।

प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत् ।
चेष्टां[६]श्चैव विजानीयादरीन्योधयतामपि ॥

प्रहर्षयेत्—जये तु[७] यशोभूम्यादिलाभः, संग्राममरणे तु यशोदिव्यस्वर्गलाभोत्तमसुखानि, पलायने ऽर्थहानिः[८] अकीर्त्तिः नरकदुःखानि रणादपक्रान्तस्यापि काले मरणमवश्यमेवेत्यादि सप्रमाणवाक्यैः । 'भेर्य्यादिभिरपी'ति **पल्लवः** । बलमत्र सैन्यादि[९] परं 'बलमत्रषड्विधमिभादेरपि हर्षेण जयसंपत्ते'रिति **लक्ष्मीधरः** । इष्टतया किमनिष्टतया इच्छया किमनिच्छया[१०] युध्यत इति ज्ञापकेङ्गितादिरूपा चेष्टा ।

[११]उपरुद्धयारिमासीत राष्ट्रं चास्योपपीडयेत् ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥
भिन्द्याच्चैव तडागानि प्राकारं[१२] परिखास्तथा ।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥

---

[१] म० भा० । चारयित्वा इति । [२] म० भा० । नरान् ।
[३] म० भा० । ज्ञात्वा ।
[४] (घ) (ङ)योः । मासादिभिः ।
[५] म० । ७ । १९४ ।
[६] म० । (घ) । चेष्टाश्चैव ॥ (ङ) । "चैष्टाञ्चाव०" इत्यशुद्धः पाठः ।
[७] (घ) । "तु" नास्ति ।
[८] (घ) (ङ)योः । अर्थहान्यकीर्त्तिनरकदुःखानि इति सम्यक् पाठः ।
[९] (ख) (ग) (घ) पुस्तकेषु सेनान्यादिपरमिति ।
[१०] किमनिच्छयेति पाठः प्रमादात् (ङ) पुस्तके त्रुटितः ।
[११] म० । ७ । १९५-७ ।
[१२] म० । प्राकारपरिखास्तथा ॥ (घ) (ङ)योः । प्रकारमित्यपपाठः ।

उपजप्यानुजपेद्बुद्धयेच्चैव[1] च तत्कृतम् ।
[2]युक्ते च देवे युद्धयेत जयप्रेप्सुरपेतभीः ।

उपजपेत् भेदयेत् ।

विजयोत्तरकृत्यमाह स एव[3] ।

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्म्मिकान् ।
प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥
सर्वेषान्तु विदित्वैषां समासेन[4] चिकीर्षितम् ।
स्थापयेत्तत्र तद्वंश्यं कुर्य्याच्च समयक्रियाम् ॥

सर्वेषामरिमन्त्रिणां चिकीर्षितमभिप्रायं, तद्वंश्यं निहतशत्रुवंश्यं स्थापयेद्राज्येऽभिषेचयेत्, समयक्रियामिदं त्वया कर्त्तव्यमिति व्यवस्थाम् । **विष्णुः** ।

"अरावाप्तौ[5] तद्वंश्य[6]मभिषिञ्चेत्[7]" ॥

अत्र बलायुधादिशिक्षादि[8] विस्तरभयान्नोक्तम् ॥

इति चण्डेश्वरकृतोत्र बलतरङ्गः ॥

---

[1] युद्धयेदिति (क) (ख) (ग) (घ)पुस्तकेषु ॥ म० । बुध्येतैव ।

[2] "मुक्तेऽपि" इति (ङ) पुस्तक पाठः प्रामादिकः । म० । दैवे ।

[3] म० । ७ । २०१-२ ॥ (घ) (ङ)योः स एवेति पाठो नास्ति ।

[4] समानेनेति (ङ) पुस्तक पाठः प्रामादिकः ।

[5] पुरावाप्तौ (घ) (ङ) योः ।

[6] तदवश्यमिति (ङ) पाठः प्रामादिकः ।

[7] विष्णुस्मृतौ तु (३ । ४७) "राजा परपुरावाप्तौ तु तत्र तत्कुलीनमभिषिञ्चेत् ॥"

[8] (ग) । बलायुधादि विस्तर० । इति ।

## अथ सेनानी ॥ (C. X.)

**मनुः**[1] ।

अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया ।
नृपतौ कोशराष्ट्रे च दूते सन्धिविपर्ययौ ॥

अमात्यः सेनानी, दण्डो हस्त्यश्वरथपदातादिः[2] ।

**भारते** ।

सेनाप्रणेता च भवेत्तावता तु दृढव्रत[3] ।
शूरः क्लेशसहश्चैव हितो भक्तश्च पूरुषः ॥

**राजनीतौ**[4] ।

पितृपैतामहो[5] वंश्यस्संहतो दत्तवेतनः ।
[6]प्रख्यातपौरुषो जन्यः कुशलः कुशलैर्वृतः ॥
नानाप्रहरणोपेतो नानायुद्धविशारदः ।
नानायोध[7]समाकीर्णो नीराजितहयद्विपः ॥
[8]प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः ।
अद्वैधः[9] क्षत्रियप्रायो दण्डो दण्डविदां मतः ॥

---

[1] म० । ७ । ६५ ।

[2] नैषोऽर्थः समीचीनः । "अमात्ये मन्त्रिणि दण्ड आयत्तः अधीन" इति रामचन्द्रः । "अमात्यः सर्वकार्यनिर्व्वाहक" इति नन्दनः । दण्डः शासनम्, यथा दण्डनीतिपदे । पदात्यादिरिति युक्तम् ॥ (घ) (ङ) योः । पादातादिः । कु० ।

[3] म० भा० । आश्रम० । ६ । ४३ । "तव तात दृढव्रतः" । इति भारते ॥

[4] कामन्दकः । ४ । ६३-६५ ।

[5] का० । वश्यः । इति ।

[6] का० । विख्या० । इति ।

[7] का० । ०यौघ० । इति ।

[8] (ख) । "पुरा व्यायामदुःखेषु" । पुरायासदुःखेषु । (ङ) ।

[9] अ० का० । 'अद्वैध्यः' ॥ मै० का० । 'अद्वैधः' । आयुधः । (ङ) ।

पितुरयं [1]पितामहस्यायमिति पितृपैतामहो, वंश्यः संबन्धी, संहतोऽपेक्षितः, दण्डोऽत्र[2] सेनापतिर्विवक्षितः प्रागुक्तावुक्तविशेषणासंभवात् न च पदातौ सम्भवो नीराजितहयद्विपत्वाभावात् ।

[3]नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप[4] ।
तत्र तत्र च सेनानीर्यायाद्[4] व्यूहीकृतैर्बलैः ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वतो नागा नागानाञ्च पदातयः[5] ॥
पश्चात्सेनापतिर्यायात्सेनामाश्वासयंश्छनैः ।

**मनुः**[6] ।

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङमुखाः ॥
न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि[7] दिग्धैर्नाग्निज्वलिततेजनैः ॥
न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् ।
न मुक्तकेशं नासीनं न तवास्मीतिवादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥
न युद्ध[8]व्यसनप्राप्तं नार्तं नातिपरीक्षितम्[9] ।
न भीतं न परावृत्तं सतां धर्म्ममनुस्मरन् ॥
यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ।
भर्त्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥

---

[1] (क) (ग)। पैतामहस्य० ।
[2] दण्डोऽत्र सेनायाम् ।   [3] का० । १९ । ४४ । ४६ । ४७ ।
[4] का० । भवेत् । सेनापतिस्तत्र तत्र गच्छेद्० । इति ।
[5] का० । "नागानाञ्चाटवीबलम् । पश्चात्सेनापतिस्सर्वं पुरस्कृत्य कृती स्वयं, यायात्सन्नद्धसैन्यौघः खिन्नानाश्वासयञ्छनैः ।"
[6] म० । ७ । ८९-९५ ।   [7] नासिदिग्धैर्नापि ज्वालन्ततेजनैः । (ङ) ।
[8] नायुधव्यसन० । इति मानवपाठान्तरम् ।
[9] म० । नातिपरिक्षतम् । इति ।

यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् ।
भर्त्ता च[1] तत्समादत्ते परावृत्तहतस्य तु ॥

अत्र महीक्षित उपलक्षणम्। [2]सेनान्यादीनामप्येष एव धर्म्मः। [3]'एषोऽनुपस्कृतः प्रोक्तो [4]योधधर्म्मस्सनातन' इत्युपसंहारात्। इदमदृष्टार्थं प्रसङ्गादुक्तम् ॥

इति चण्डेश्वरकृतस्सेनानीतरङ्गः ॥

---

[1] म० । तत्सर्वमादत्ते ।
[2] सेन्यादीनां (ङ) ।
[3] म० । ७ । ९८ ।
[4] यो हि धर्मः । (ङ) ।

## अथ दूतादिः ॥ (C. XI.)

मनुः[१] ।

दूतञ्चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित् ।
वपुष्मान् वीतभीर्वाग्ग्मी दूतो राज्ञः प्रशस्यते[२] ॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् ।
दूतस्तत्कुरुते कर्म्म भिद्यन्ते[३] येन मानवाः[४] ॥
स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टा[५] भृत्येषु च चिकीर्षितम् ॥
[६]लब्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥

दूतद्वारेण लब्ध्वा राजेति शेषः । दूतस्यावध्यत्वमाह **नीतौ शुक्रः** ।

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥

तथा[७] ।

स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते च कः ।
[८]सदैवावध्यभावेन दूतस्सर्वं हि जल्पति ॥

---

[१] म० । ७ । ६३–६८ ।
[२] एतदग्रे (घ) (ङ)योः
"अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया । नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्ययौ" ॥ इत्यधिकः पाठः ॥
[३] (ङ) । भिन्दन्ते इति ।
[४] (क) (ग)योः । वा नराः ।
[५] म० । चेष्टामिति । [६] म० । बुध्वा ।
[७] (घ) (ङ)योः । 'तथा' इति नास्ति ।
[८] सदैवावध्यभावेनेति (ङ) पुस्तकपाठः सम्यक् ॥ "सदैवारा०" इत्यन्येष्वपपाठः ।

प्रतीहारकार्य्यमाह ।

> [1]विश्वस्तांस्तान्विचिन्वीरन् [2]द्वास्थाः पक्षान्तरं [3]गतान् ।
> ते शस्त्रवाहका[4] ब्रूयुः प्रयुक्ताः स्म इति स्फुटम् ।

विश्वस्तान् यद्गमनेन न स्वामिभयार्दितान् (°भयार्त्तिस्तान् ?) पक्षान्तर[4]गतान् प्रत्यर्थिपक्षोपगतान्, विचिन्वीरन् एकमन्तर्गमयेयुरेकं द्वारेऽवरुन्धन्ति ते चास्मिन्नर्थे वयं नियुक्ता इति ब्रूयुः समागतसज्जनमाना[5]येत्यभिप्रायः ।

मित्रमाह **मनुः**[6] ।

> हिरण्यभूमिसंप्राप्त्या पार्थिवो[7] न तथैधते ।
> यथा मित्रं ध्रुवं लब्ध्वा कृ[8]शमप्यायतिक्षमम् ॥
> धर्म्मज्ञञ्च कृतज्ञञ्च तुष्टप्रकृतिमेव च ।
> अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥

**नीतौ**[9] ।

> य एनमुत्पथगतं वारयन्ति निवारिताः[9] ।
> मज्जमान[10]मकार्य्येषु सुहृदो वारयन्ति हि ॥
> [11]सत्यं न ते हि सुहृदो गुरवो गुरवो हि ते ।
> [11]पश्यन्नपि भवत्यन्धो यस्माद्रागावृतःपुमान्[12] ॥

---

[1] का० । ६ । १२ ।
[2] इति मैं० का० पुस्तकेऽपि । अ० का० । 'विश्वस्ता विचिन्वीयुः' ।
[3] का० । 'कक्ष्यान्तरागतान्' । ४ (ख) (ग) (घ) (ङ)। 'पक्षान्तरं गतान्' ।
[4] ग्राहका इति मैं० का० । ०ग्राहिण इति अ० का० ।
[5] (क) । ०गमनाय । (घ) मानाय ।
[6] म० । ७ । २०८–९ ।
[7] पार्थिवेन यथैधते । (घ) । पार्थिवेन यथेजते । (ङ) ।
[8] भृश० इति (क) (ख) (ग) (घ) पुस्तकेषु ।
[9] कामन्दकः । ४ । ४२–६ । वारयन्त्यनिवारिताः । का० ।
[10] का० । सज्जमान० ।
[11] इति मैं० का० पाठोऽपि । अ० का० पाठः (४३, ४५) व्यत्यस्तः ।
[12] का० । 'वृतेक्षणः' ।

सुहृद्वैद्याश्चिकित्सन्ति निर्म्मलैर्विनयाञ्जनैः ।
कृतविद्योपि बलिना रक्तो[1] रागेण रज्यते ॥
रागोपरक्तचित्तस्सन्न किं कुर्य्यादसांप्रतम् ।
राग-मान-मदान्धस्य स्खलतः पृथिवीपतेः ॥
हस्तावलम्बो भवति सुहृत्सचिवचेष्टितम् ।

**याज्ञवल्क्यः**[2] ।

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरायते[3] ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितम्[3] ॥

नन्वनयगामिनृपवारणे प्राणसन्देहस्तदा कथं निवारित इति सत्यमेतत्परन्तु श्रुतिस्मृत्यादौ नित्यत्वाद्धर्म्मस्यैव निरुपेक्षितत्वात्[4] लोकेऽपि वाच्यत्वप्रसङ्गाच्च । तदाह[5]

मदोन्मत्तस्य[5] नृपतेः संकीर्णस्येव दन्तिनः ।
गच्छन्त्यन्यायवृत्तस्य नेतारः[6] खलु वाच्यताम् ॥

मित्रपरीक्षा ।

[7]त्यागविज्ञानमन्त्राढ्यं[8] महापक्षं प्रियंवदम् ।
आयतिक्षममद्वेष्यं मित्रं कुर्वीत सत्कुलम् ॥

सत्कुलं कुलीनं तत एव मैत्री निर्वहतीति युक्तिः ।

[9]दूरादेवाभिगमनं स्पष्टार्थहृदयानुगा ।
वाक् सत्कृत्य प्रदानञ्च त्रिविधो मित्रसंग्रहः ॥

अभिगमनमभ्युत्थानं, स्पष्टार्थहृदयानुगा अच्छद्ममधुरा[10] वाणी, सत्कृत्यदानमिष्टकरणमिति त्रिविधो मैत्रीरक्षणो[11]पायः ।

---

[1] का०। 'व्यक्तम्' ।
[2] या० । १ । ३५२ ।
[3] या० । 'वरा यतः' । समाहितः ।
[4] (क) । 'निरपेक्षित्वात्' ।
[5] का० । ४ । ४७ । मदोद्धतस्येति ।
[6] नेतरः (घ) (ङ)योरशुद्धः पाठः ।
[7] का० । ४ । ६६ । योगविज्ञान इति मैं० का० ।
[8] का० । 'सत्वाढ्यम्' । मन्त्राद्यं (ङ) ।
[9] का० । ४ । ६९ ।
[10] मधुरानुरागिणी । (ङ) ।
[11] मैत्री करणोपायः । (ङ) ।

[1]धर्म्मार्थकामसंयोगो मित्राच्च त्रिविधं फलम् ।
यस्मिन्[2] एतत्त्रयन्नास्ति तन्न सेवेत पण्डितः ॥
औरसं कृत[2]सम्बन्धं तथा वंश[2]क्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥

औरसमत्र जन्मना सम्बन्धि, कृतसंम्बन्धं पाणिग्रहणादिना[3] सम्बन्धि, वंशक्रमागतं पित्रादिमित्रं, व्यसनेभ्यः रक्षितं चतुर्विधमिदं मित्रमिति । न चौरसपदेन पुत्रो,[4] मातापितृभ्रातृबान्धवादीनां[5] तथात्वात् ।

[6]शुचिता त्यागिता शौर्य्यं समानसुखदुःखता ।
अनुरागश्च दाक्ष्यञ्च सत्यता च सुहृद्गुणाः ॥

यद्यपि सर्व एवैते मित्रगुणास्तथापि समावेशात्संक्षिप्याह ।

[7]तदर्थेहानुरागश्च संक्षिप्तं मित्रलक्षणम् ।
यस्मिन्नेतद्धि तन्मित्रं तत्रात्मानं विनिःक्षिपेत्[8] ॥

तदर्थेहा तदिष्टस्पृहा । इदं सामान्यं, विशेषो मण्डलकथने (C.XII) ॥ चाराः[9] ।

**मनुः**[10] ।

उपगृह्यास्पदञ्चैव चारान्सम्यग्विधाय च ।

**याज्ञवल्क्यः** ।

[11]चारान् पश्येत्ततो दूतान् प्रेषयेन्मन्त्रिसङ्गतः ।

**महाभारते**[12] ।

चारैर्विदित्वा शत्रूंश्च ये राज्ञामन्तरैषिणः ।
तानाप्तः[13] पुरुषैर्दूराद्घातयेथा नरर्षभ[13] ॥

---

[1] का० । ४ । ७०–७१ ।
[2] इति मै० का० पाठोऽपि । अ० का० । 'यस्मात्' । मैत्रसम्बद्धं । देश० ।
[3] पाणिग्रहादिना । (ङ) । [4] पुत्राविति । (घ) ।
[5] मातृ० इति पठनीयम् । [6] का० । ४ । ७२ ।
[7] का० । ४ । ७३ ।
[8] का० । 'यस्मिन्नैतन्न तन्मित्रं ...... न निक्षिपेत्' ।
[9] नास्ति । (घ) (ङ)योः । [10] म० । ७ । १८४ ।
[11] या० । १ । ३२७ । पश्येच्चारांस्ततो दूताननिति या० ।
[12] म० भा० । आश्रम० । ६ । ३६ ॥ ७ । १३ ।
[13] म० भा० । ०आप्तैः । इति । (घ) । म० भा० । नराधिप ।

प्रकृतीनाञ्च राजेन्द्र चाराणां[1] च विभावयेत् ।

क्रमेण युगपत्सर्वं[1] व्यवसायं महाबलम् (read बलाबलम्)॥

बलाबलादिज्ञानार्थं प्रथमं चारान् पश्येत्ततो दूतानित्यर्थः । चारान् गूढान् गूढपुरुषान् दूतान् परस्परं[2] वृत्तसूचकान् ।

**राजनीतौ**[3] ।

प्रख्यातवंश[4]मक्रूरं लोकसङ्ग्राहिणं शुचिम्[5] ।

कुर्वीतात्महिताकाङ्क्षी परिवारं महीपतिः ॥

[6]क्रूरोऽपि भाग्यतामेति परिवारगुणैर्नृपः ।

प्रख्यातवंशं कुलीनं लोकस[7]ङ्ग्राहिणं सापेक्षं परिवारं सेवकम् । सपरिवार-कृत्यमाह[8] ।

वृत्तस्थं वृत्तसंपन्नाः कल्पवृक्षोपमं नृपम् ।

उपगम्य[9] गुणैर्युक्तं सेवेरन्ननुजीविनः ॥

द्रव्यप्रकृतिहीनोपि सेव्यः सेव्यगुणान्वितः[10] ।

भवत्याजीवनं तस्मात् श्लाघ्यं कालान्तरादपि ॥

अनात्मवान्नयद्वेषी वर्धयन्नरिसम्पदः ।

प्राप्यापि महदैश्वर्य्यं सह तेन विपद्यते[11] ॥

अनात्मवानज्ञः नयद्वेषी नीतिनिन्दकः रिपुसंपद्वर्द्धको न सेव्य इत्याशयः

[12]तत्क्लिश्यन्नापकुर्वीत [13]न [14]लोकद्वेषमाचरेत् ।

---

[1] म० भा० । राजादीनामिति [राजादीनानिति, वा (कु० म० भा०)] । बुध्वा व्यसनानां बलाबलम् । म० भा० ।

[2] परस्परवृत्तसूचकान् (घ)(ङ)योः ।

[3] का० । ४ । १०–११ ।

[4] मै० का० । ।'०वर्त्मं' ।

[5] शुचीन् । (घ) (ङ) योः ।

[6] मै० का० । 'क्रूरोऽपि सेव्यता०' । आ० का० । 'दुष्टोऽपि' (क्रूरोऽपि वा) भोग्यता० ।

[7] लोकसापेक्ष्यं लोकसंग्राहिणम् । (ङ) ।

[8] का० । ५ । १–२ । ४ ।

[9] का० । 'अभिगम्य०' ।

[10] मै० का० । '०गुणैर्युतः' ।

[11] का । विनश्यति । इति पाठान्तरम् ।

[12] का० । ५ । ६ ।

[13] का० । 'तत् क्लिश्यन्नपि०' ॥ मै० का० । ०न्नपि मेधावी ।

[14] लोके (ङ) । का० ०द्विष्ट० ।

स्वामितो दुःखितोपि स्वामिनो नापकारं कुर्य्यात् न परद्वेषमाचरेत् वृथेति शेषः ।

[1]क्लिश्यन्नपि हि मेधावी शुद्धं जीवनमाचरेत् ।
तेनेह श्लाघ्यतामेति लोकेभ्यस्तु न हीयते ॥
आरिराधयिषुस्सम्यगनुजीवी महीभुजम्[2] ।
विद्याविनयशिल्पाद्यैरात्मानमुपपादयेत् ॥
कुलविद्याश्रुतौदार्य्यशिल्पविक्रमधैर्य्यवान् ।
वपुस्सत्त्वबलारोग्यसत्य[3]शौचदयान्वितः ॥
पैशुन्यद्रोहसंभेदशाठ्यमौढ्या[4]नृतातिगः ।
[5]दम्भचापल्यहीनञ्च सेवनं कर्तुमर्हति ॥

सम्भेदोऽत्र कलिकर्म्म ।

[6]दक्षता भद्रता दार्ढ्यं क्षान्तिःक्लेशसहिष्णुता ।
सन्तोषः शीलमुत्साहो मण्डयन्त्यनुजीविनम् ॥

इत्यष्टौ प्रधानगुणाः ।

परस्थानासनं क्रौर्य्यमौद्धत्यं मत्सरं त्यजेत् ।
[7]विसृज्य कथनञ्चैव न कुर्य्याज्जायया[8] सह ॥

राजवेश्मनि एकान्ते कथनं स्त्रिया सह न कुर्य्यात् जायया राजजाययेति। "राजानं विसृज्य न कुर्य्यादि"ति **पल्लवः** ।

[9]विप्रलम्भं च मायां च दम्भं स्तेयं च वर्ज्जयेत् ।

स्तेयं विवर्ज्जयेत् । यद्यपि सर्वनिषेधस्तथापि राजवेश्मनि सन्निहितभयादत्र विशेषतो निषेध इत्याशयः ।

---

[1] का० । ५ । ९ । १२–१४ । क्लिश्यन्नपीह । (ङ) ।
[2] महीभुजाम् । (ङ) । का० । महीपतिम् ।
[3] का० स्थैर्यशौच० ।
[4] का० । लौल्य० । मौढ्यनृतातिगः । (ङ) ।
[5] का० । स्तम्भचापल० । (ङ) । ०हीनश्च ।
[6] का० । ५ । १५ ।
[7] का० । ५ । १८ । विगृह्य कथनं चापि ।
[8] का० । 'ज्यायसा' ।
[9] का० । ५ । १९ । (ङ) । दम्भस्तेयं ।

[1]न नर्म्मसचिवैः सार्धं किञ्चिदप्यप्रियं वदेत् ।
तेऽस्य मर्म्माणि कृन्तन्ति[2] प्रहासेनैव संसदि ।।

नर्म्मसु सचिवैर्नर्म्मसचिवैः परिहासादिचतुरैः, कटुनादिभिरिति **पल्लवः**। प्रियाद्भिन्नमप्रियं साभिप्रायार्थवचनमिति यावत् मर्माण्याशयानि। तथा च तैः सभायां तद्वचनप्रहासेन तदुच्छेद इत्यर्थः ।

[3]भर्त्तुरर्धासने[4] दृष्टिं मुहुर्नान्यत्र कारयेत्[4] ।
न ब्रूयात्किञ्चिदन्योन्यं तिष्ठेदास्यं विलोकयन् ।।
कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति[5] च ।
आज्ञां न वितथां कुर्य्याद्यथाशक्त्यविलम्बितः[6] ।।
उच्चैःप्रकथनं हास्यं[7] ष्ठीवनं कुत्सनं[8] तथा ।
जृम्भणं गात्रभङ्गं च पर्वस्फोटं विवर्ज्जयेत् ।।

अर्धासने पुरोभागार्धासने अन्योन्यं सेवकेन सह न ब्रूयात् । ष्ठीवनं मुखनिर्गत-जलविन्दुविशेषम्। जृम्भणं मुखव्यायक्रियाविशेषं, गात्रभङ्गं गात्रकौटिल्यक्रिया-विशेषं पर्वस्फोटमङ्गुलीपर्वस्फोटनम् ।

[9]समर्थयंश्च तत्पक्षं साधु भाषेत[10] भाषितम् ।

तत्पक्षं प्रभुपक्षम् ।

[11]विजानन्नपि न ब्रूयाद्भर्त्तुः क्षिप्तोत्तरं वचः ।
प्रवीणोऽपि हि मेधावी वर्ज्जयेदभिमानिताम् ।।

क्षिप्तोत्तरम् परित्यक्तोत्तरम् ।

[12]यदप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्त्तयेत् ।
[13]कर्म्मणा तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ।।

---

[1]का० । ५ । २० । [2] इति मै० का० पाठोऽपि । अ० का० । 'अभिघ्नन्ति' ।
[3] का० । ५ । २१–२३ ।
[4] इति मै० का० पाठोऽपि । अ० । का० । अन्वासितः । निक्षिपेत् ।
[5] का० । 'आज्ञापयेति' ।
[6] इति मै का० पाठोऽपि । अ० का० । 'अविलम्बितम्' ।
[7] का० । हासं । [8] का० । कुत्सितं । [9] का० । ५ । २४ ।
[10] (क) (ख) (ग) (ङ) पुस्तकेषु 'भाषित' । [11] का० । ५ । २६ ।
[12] का० । ५ । २७ । [13] कर्मणा तस्येत्यारभ्य मृदु कीर्त्तयेदित्यन्तः पाठो लेखकप्रमादात् (ङ) पुस्तके त्रुटितः ।।

प्रबलतरमपि वचनं मृदु कीर्त्तयेत् कर्म्मणा सोपन्यासेन।

[1]आपद्युन्मार्गगमने कार्य्यत्यागात्ययेषु [2]च।
[3]तन्नियोगेन तु ब्रूयादर्थं सुपरिनिष्ठितम्[4] ॥

अत्र तदभिप्रेतं ब्रूयात्। इदं तु कार्य्यसिद्धौ मज्जमानमकार्य्येष्वित्यादि-वचनात्।

मुखप्रसन्नगोष्ठीषु[5] वादेषु वादिनां मतम्।
[6]अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥
[7]गुह्यं कर्म्म च मन्त्रं च न भर्त्तुः संप्रकाशयेत्।
विद्वेषं च विनाशं च[8] मनसापि न चिन्तयेत् ॥
स्त्रीभिस्तद्दर्शिभिः पापैर्वैरिभूतै[9]र्निराकृतैः।
एकार्थचर्य्यां संवासं[10] संसर्गं च विवर्ज्जयेत्।
देशभावा[11]नुकरणं न कुर्य्यात्पृथिवीपतेः ॥
सम्पन्नोऽपि हि मेधावी स्पर्द्धेत न च तद्गुणैः।
रागानुरागौ[12] जानीयाद्भर्त्तुः कुशलकर्म्मकृत् ॥
इङ्गिताकारतत्त्वाद्यै[13]रिङ्गिताकारत्त्ववित्।
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् ॥

स्वामिनो मय्यनु[14]रक्ति(र्न)वेति विज्ञापयेत् (? विजानीयात्)। मय्यनु-

---

[1] का०। ५। २८।

[2] का०। 'कार्यकालात्ययेषु'।

[3] का०। ५। २५। एषः श्लोकानुक्रमः (अ० का० २६, २९, २८, २५) मैं० कामन्दकीयेऽपि। व्यत्यासः अ० कामन्दकीये।

[4] का०। सुपरिनिश्चितम्। इति पाठान्तरम्।

[5] का०। सुखप्रबन्ध०।

[6] का०। ५। २८।

[7] का०। ५। ३१–३५।

[8] इति मैं० का० पाठोऽपि ॥ अ० का०। 'विद्विष्टमपि नाशं च'।

[9] का०। ०दूतैः।

[10] का०। एकार्थचर्यासङ्घातं ॥

[11] का०। वेशभाषा०।

[12] का०। 'रागापरागौ'।

[13] का०। 'इङ्गिताकारलिङ्गाभ्याम्।

[14] स्वामिनो मय्यनुरक्तिर्वेति। (घ)(ङ)योः।

रक्तविरक्तस्य स्वरूपमाह ।

[1]दिशत्यासनमभ्याशे कुशलं परिपृच्छति ।
विविक्तदर्शने[2] स्थाने रहस्यं च[2] न शङ्कते[2] ॥
[3]तदर्थान्तत्कृतां चोच्चैराकर्णयति सत्कथाम् ।
श्लाघते श्लाघ्यमानेषु श्लाघनीयञ्च नन्दते[4] ॥
कथारम्भेषु[5] स्मरति प्रकृष्टं[6] कीर्तयेद्गुणान् ।
सहते तथ्यमप्युक्तं[7] न निन्दामनुवर्त्तते[8] ॥
करोति वाक्यं तद्वक्तं [9]तद्वचो[10] बहुमन्यते ।
उपचारेषु मध्यस्थं[11] दर्शयत्यद्भुतेषु च[12] ।
तत्कृतं कर्म्म चान्येन कृतमित्यभिभाषते ॥

रहस्यं न शङ्कते,[13] गोप्यमिदमनेनास्य भेद इति न शङ्कते तदर्थां तदिष्टां काय्यन्तिरेष्वनवसरेषु । अतथ्यमपि तेनोक्तं सहते क्षमते तत्कृतं कर्म्मेति अन्यकृतं तत्कृतं भाषते च शब्दाद्विपरीतं कर्म्म तेन कृतमन्यकृतं भाषते अनुरक्तौ ।

[14]विपक्षमुत्थापयति विनाशं चाप्युपेक्षते ।
कर्य्ये संवर्धयत्याशां फले च कुरुतेऽन्यथा ॥

---

[1] का० । ५ । ३५–४० ।

[2] ०दर्शनमिति पुस्तकेषु ॥ का० । ०दर्शने । इति । रहस्ये । इति । (घ) (ङ)योः । शङ्किते ।

[3] तदर्थं तत्कृतं चोच्चैरिति (ङ)पुस्तकपाठोऽशुद्धः ।

[4] का० । 'श्लाघनीयेषु श्लाघ्यमानं च नन्दति' ।

[5] का० । 'कथान्तरेषु' ।

[6] का० । 'प्रहृष्टः' ।

[7] इति मै० का० पाठोऽपि । अ० का० । 'पथ्यमुक्तस्सन्' ।

[8] का० । 'मन्यते' ।

[9] का० । तस्यैवेति । तद्भक्तमिति अ० का० कामन्दकपाठान्तरम् । (ङ) तेनोक्तं ।

[10] अ० का० । 'तद्वच्च' । मै० का० । तद्वचः ।

[11] का० । 'उपकारेषु माध्यस्थम्' ।

[12] वृद्धावितिश्लोकार्द्धः (अ० का० ५ । ३९) मैथिलपुस्तके रत्नाकरे नास्ति ।

[13] शक्यते । (घ) (ङ)योरशुद्धः पाठः ।

[14] का० । ५ । ४०–४७ ।

यद्वाक्यं मधुरं किञ्चित्तदप्यर्थेन निष्ठुरम् ।
आचरत्यात्मसंसत्सु परिवादेन[1] केवलम् ॥
अकोपोऽपि हि कोपाभः[2] प्रसन्नोपि हि निष्फलः ।
वदत्यकस्माद्वदति रुक्षं च मुहुरीक्षते[3] ।
[4]आघट्टयति मर्म्माणि सहन्नास्यं प्रपद्यते[5] ॥
संभावयति दोषेण[6] वृत्तिच्छेदं करोति च ।
साधूक्तमपि तद्वाक्यं समर्थयति चान्यथा ॥
अपर्वणि कथारम्भं[7] करोति विरसीभवन् ।
उपास्यमानः शयने सुप्तलक्षेण तिष्ठति ॥
यत्नेनाराध्यमानोऽपि सुप्तवच्च विचेष्टते ।
इत्यादि चानुरक्तस्य विरक्तस्य तु लक्षणम् ॥

विपक्षमुत्थापयति सेवकादेः विपक्षं प्रेरयति कलये(?)[8] पुनर्विनाशमप्युपेक्षते। विनाशस्याप्युपायं न कुरुत इत्यर्थः [।] साधूक्तमवश्यकर्तव्यमपि तद्वचनमन्यथा तदा तिरस्कृत्यान्यद्वारेण साधयति। अपर्वणीति अपूर्णायां कथायां विरसीभवन् रुक्षीभवन्कथाभङ्गं करोति कथां छिनत्तीत्यर्थः ।

[9]रक्ताद्वृत्तिं समीहेत विरक्तं च विवर्ज्जयेत्[10] ।

इति अनुरागविरागपरीक्षाफलम् ॥

[11]निर्गुणं चापि[12] भर्त्तारमापत्सु न परित्यजेत् ।
अतः परतरो नास्ति य आपत्सूपतिष्ठते ॥

---

[1] का० । 'परिवादं च' । परीवादेन । (ङ) ।
[2] अ० का० । 'स कोपाभः' । मै० का० । 'कोपाभः' ।
[3] अ० का० । 'हसत्यकस्माद् व्रजति रुक्षं च समुदीक्षते' ॥ मै० का० । व्रजत्य० (शेषः यथा रत्नाकरे) ।
[4] विज्ञाप्यमान इति श्लोकार्द्धः (अ० का० । ४३ ।) नास्ति मै० पुस्तके रत्नाकरे च ।
[5] अ० का० । 'गुणैर्न बहुमन्यते' । मै० का० । हसन्नास्यं० ।
[6] मै० का० । 'दोषं च' ।
[7] का० । कथाभङ्गम्। चण्डेश्वरोपि टीकायां कथाभङ्गमित्येव पठति ।
[8] कलहे (?) । (ग) कालय (?) ।
[9] का० । ५ । ४७ ।
[10] का० । 'परित्यजेत्' ।
[11] का० । ५ । ४८–५० । ५३ । ५५ । ५९ । ६२ ।
[12] का० । 'ह्यपि' ।

विपत्सु[1] धर्म्मधुर्याणां तेषां नामातिरिच्यते ।
श्लाघ्या[2] चानन्दजननी[2] महतामुपकारिता ॥
काले कल्याणमाधत्ते स्वल्पापि हि[3] महोदयम् ।
राजानं ये ह्युपेक्षन्ते मज्जमानमकर्म्मसु[4] ॥
ते गच्छन्त्यकृतात्मानस्सह तेन पराभवम् ।
भर्त्तुश्चित्तानुवर्त्तित्वं[5] सद्वृत्तमनुजीविनाम् ॥
अप्रियोऽपि हि पथ्यः स्यादिति वृद्धानुशासनम् ।
वृद्धानुशासने तिष्ठन् प्रियतामधि[6]गच्छति ।
अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्प्पति ।
क्षीणक्षीरां निराजीव्यां वत्सस्त्यजति मातरम् ॥

इदमनुजीविकृत्यम् ॥

अथानुजीविनि राजकृत्यमत्रैव[7] ।

[8]अपात्रे वर्षणं यत्तत्र कुर्य्यात्सद्विगर्हितम् ।
[9]अपात्रे [10]वर्षणादन्यत्किं स्यात्कोषक्षयादृते ॥

वर्षणं जलवर्षणम् (?) इत्यर्थः ।

[11]कुलं विद्यां श्रुतं शौर्य्यं सौशील्यं भूतपूर्वताम् ।
वयोऽवस्थां च संलक्ष्य[12] आद्रियेत महात्मनाम्[13] ॥

---

[1] इति मै० का० । अ० का०—'विरोधे' कर्मधुर्याणां । (ङ) । नामाति विद्यते ।

[2] इति मै० का० । अ० का०—'चानन्दती' । (ङ) । श्लाघ्यं ।

[3] का० । सु० ।

[4] अ० का० । 'सज्जमानं विकर्म्मसु' । मै० का० । 'सज्जमानमवर्त्मसु' । सज्जमानमकर्मसु । (ङ) ।

[5] वृत्तित्वं । (ङ) ।

[6] का० । ०मुप०

[7] का० । ५ । ६५ ।

[8] का० । 'अपात्रवर्षणं जातु न कुर्यात् सद्विगर्हितम्' ।

[9] का० । 'अपात्रवर्षणात् किं स्यादन्यत्' ।

[10] (ग) । का० । अपात्र० ।

[11] का । ५ । ६६ । ६७ । ६९ ।

[12] अ० का० । 'संवीक्ष्य' । मै० का० । 'संप्रेक्ष्य' ।

[13] का० । 'स्वाद्रियेत महामनाः' ।]

[1]सुशीलान्नावमन्येत सम्यग् वृत्तान्मनस्विनः ।
त्यजन्ति तेऽवमन्तारं[2] घ्नन्ति वा मानहेतवे ॥
उत्तमाभिजनोपेतं[3] न नीचैस्सह वर्धयेत् ।
कृशोपि हि विवेकज्ञो याति[4] संश्रयणीयताम् ॥

उत्तमं नीचवत्सत्कारेण न वर्धयेदित्यर्थः। हि यतः विवेकज्ञ उत्तमाधम-विचारवित् संश्रयणीयतां सेव्यत्वम्

[5]लक्ष्म्या लक्ष्मीवतां लोके विकाशिन्यापि किं तया ।
बन्धुभिश्च सुहृद्भिश्च विश्वासं[6] या न भुज्यते ।

विकाशिन्या विख्यातया सम्पदा किं यदुपभोगो नास्ति बन्धुसुहृदादेः ।

[7]आयद्वारेषु सर्वेषु कुर्य्यादाप्तान् परीक्षितान् ।
आददीत फलं तेभ्यो[8] भास्वा[9]नुस्त्रैरिवोदकम् ॥
अभ्यस्तकर्म्मणस्तज्ज्ञान् शुचींस्तत्त्वार्थकोविदान्[10] ।
कुर्य्यादुद्योगसंपन्नानध्यक्षान् सर्वकर्म्मसु ॥
यो यद्वस्त्वभिजानाति[11] तत्र तं विनियोजयेत् ।
[12]विशेषविषयप्राप्ताविन्द्रियार्थेष्विवेन्द्रियम् ॥
कोषागारे[13]भियुक्तः स्यात्तदायत्तं हि जीवितम् ।

आयद्वारेषु धनागमद्वारेषु, आददीत गृह्णीयात् । उस्त्रैः[14] किरणैः । सर्व-कर्म्मसु कथितलक्षणान्नियोज्य कोषागारेऽतियत्नशीलो भवेत् । तदाह[15] ।

---

[1] का० । 'कुलीनान्' ।
[2] अ० का० । 'त्यजन्त्येते हि भर्त्तारं घ्नन्ति वा मानहेतवः' । मै० का० पाठोऽपि यथा रत्नाकरे ।
[3] का० । ०पेतान् ।
[4] जाति । इति (क) (ख) (ग) पुस्तकत्रयपाठोऽशुद्धः ।
[5] का० । ५ । ७२ । [6] का० । 'विश्रब्धम्' । [7] का० । ५ । ७३–७६ ।
[8] अ० का० । 'आददीत धनं तैस्तु' ॥ मै० का० । 'फलं तैस्तु' ।
[9] भास्वानस्त्रैरिति (घ) (ङ)योः ।
[10] अ० का० । 'शुद्धार्थसङ्गतान्' । मै० का० । 'शुद्धार्थसम्मतान्' ।
[11] का० । विजानाति । [12] का० । अशेष० ।
[13] कोषागारेतियुक्तः । (घ) (ङ)योः ।
[14] अस्त्रैः । (ङ) । [15] का० । ५ । ७६ ।

नान्यायं च[1] व्ययं कुर्य्यात्प्रत्यवेक्षेत चान्वहम् ।

इति यत्नरूपम् ।

[2]अल्पमप्यपकुर्वन्ति ये पापाः पृथिवीपतेः[3] ॥
अग्नौ पतङ्गा इव ते[4] दह्यन्ते मूढचेतसः ॥

इत्यादि नीतिशास्त्रेषु बहुविततम् । तत्सर्वसारमाह **कामन्दकः**[5] ।

संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
राज्ञस्तस्मादविश्वासः केवलं हितमात्मनः ॥
[6]बृहस्पतेरविश्वासः इति शास्त्रस्य[7] निश्चयः ।

इदं **वाचस्पत्यादि** । **याज्ञवल्क्यः**[8] ।

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत्कायस्थैस्तु विशेषतः ॥

चाटः प्रतारकः, तस्करा अत्र विश्वासेन धनहारिणः । दुर्वृत्ता कितवः[9] महासाहसिकाः स्वार्थमध्य[10]कारिणः । कायस्था लेखकाः, गणकाश्च । विशेषत इति । तेषां राजवल्लभतया मायावितया दुर्न्निवारत्वात् । नन्वनुजीव्याद्यविश्वास एव तदा सन्दिग्धार्थनिश्चयो न स्यात्तन्नाति[11]विश्वसेदित्यादि वाक्यात्तस्यातिविश्वासाभावपरत्वात् ॥ तथा च राजा परविश्वासेन न समो भवेदित्यर्थः ॥

इति श्रीचण्डेश्वरकृतो दूतादितरङ्गः ॥

---

[1] का० । 'नात्यायं च' [2] का० । ५ । ८५ ।
[3] का० । 'स्वल्प ...... पृथिवीपतौ ते वह्नाविव दह्यन्ते पतङ्गा मूढचेतसः' ॥
[4] हि । (ङ) ।
[5] अनन्तशयन (Trivandrum) संस्कृतग्रन्थावलेः कामन्दकीयनीतिसारे नोपलभ्यत एष श्लोकः । मै० हस्तलिखतपुस्तके तु प्राप्यत एव ।
[6] का० । ५ । ८८ ।
[7] अ० का० । शास्त्रार्थनिश्चयः । मै० का० । 'शास्त्रविनिश्चयः' ।
[8] या० । १ । ३३६ ।
[9] कितवादयः । (घ) (ङ)योः । मि० ।
[10] मि० । प्रसह्यापहारिणः ।
[11] का० । ५ । ९८ ।

## अथ साधारणपालनादिराजकृत्यम् ॥ (C. XII.)

मनुः[१] ।

संग्रामेष्वनिवर्त्तित्वं प्रजानां चैव पालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥
क्षत्रियस्य परो धर्म्मः प्रजानामेव पालनम् ।
निर्दिष्टफलभोक्ता हि राजा धर्म्मेण युज्यते ॥

याज्ञवल्क्यः[२] ।

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥

मनुः[३] ।

आत्मानं सततं रक्षेद्दारैरपि धनैरपीति ।

प्रसङ्गात्प्रागुक्तम् । यथार्थशास्त्रेऽपि[४] ।

प्रजां संरक्षति नृपः सा वर्धयति[५] तं नृपम् ।
वर्धनाद्रक्षणं श्रेयस्तन्नाशे हि[६] तदप्यसत् ॥
न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः[७] ।
त्रिवर्गेणाभि[८]सन्धत्ते निहन्ति ध्रुवमन्यथा ॥

षड्भागमुपलक्षणं, यावता प्रजानां पीडा न स्यात्तावदेव प्रजापालनस्यावश्यकत्वात् । यद्यप्यर्थशास्त्रे 'त्रिवर्गेणाभिसन्धत्ते' इत्यनेन पुरुषार्थेषु प्रथमोपात्तत्वात् 'आत्मानं सततं रक्षेदि'त्यादिना च याव[९]दायुःपरिपालनं तावदिति

---

[१] म० । ७ । ८८ । १४४ ।
[२] या० । १ । ३३५ ।
[३] म० । ७ । २१३ ।
[४] का० । १ । १४–१५ ।
[५] का० । पार्थिवम् ।
[६] मै० का० 'तु' । अ० का० । 'ऽन्यत्' सदप्यसत् ।
[७] का० । प्रजाम् ।
[८] का० । उप० ।
[९] यावताऽयुः परिपालनं । (घ) (ङ)योः ।

वक्तुमुचितम्। तथापि प्रजापालनस्योभयलोकेष्ट[1]साधनत्वात् प्रजापालनमेव प्रथमतः कार्य्यमत एव **नारदः**[2] ।

यत्र विप्रतिपत्तिः स्याद्धर्म्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्म्मशास्त्रोक्तमाचरेत् ॥

**याज्ञवल्क्यः**[3] ।

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्म्मशास्त्रमिति स्थितिः ॥

विप्रतिपत्तिर्विरोधः। इदमुभयोर्न्निरवकाशत्वेऽन्यथासिद्धमेव तस्यैवोक्तत्वात्। तथा च प्रजापालनं स्वरक्षणं रणा[4]निर्वात्तित्वं ब्राह्मणशुश्रूषेति राज्ञामसाधारणो धर्म्म इति **प्राञ्चः । नव्यास्तु** प्रथमत आत्मरक्षणं दृष्टमुख्यफलकत्वात्। 'सर्वत आत्मानं गोपायित' इति **श्रुतेश्चात** एव स्पष्टमाह **मनुः**[5] ।

एवं सर्वं विधायेदमिति कर्त्तव्यमात्मनः ।
युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥

एवमुक्तप्रकारेण सर्वमात्मनः कार्य्यजातं संपाद्य[6] युक्तः प्रमादरहित आत्मीयाः प्रजा रक्षेदिति **मन्वर्थं** इति [?।] **मनुः**[7] ।

तान् सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥

तान् वक्ष्यमाणनृपतीन् उपक्रमैरुपायैः, पौरुषेण प्रतापादिना नयेन नीतिशास्त्रोक्तेन ।

[8]सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणं[9] चिन्तयेत्सदा ॥

सन्धिमेकीभवननिबन्धं, विग्रहमपकारं, शत्रुं प्रति गमनं यानम्, उपेक्षणमासनं, बलस्य द्विधाकरणं द्वैधीभावं, प्रबलनृपाश्रयं संश्रयः,शत्रुतः प्रधानैरेतैरुपायैः गुणैश्चात्मरक्षेत्यर्थः। अत एव सदा चिन्तयेदिति। उपायानाह **याज्ञवल्क्यः**[10] ।

---

[1] **उभयलोकेषु साधनत्वादिति (क) (ख) (ग) (घ) पुस्तकेष्वपपाठः ।**

[2] **ना० । १ । ३९ ।** [3] **या० । २ । २१ ।**

[4] **बलानिर्वात्तित्वमिति (ङ)पुस्तकपाठः प्रामादिकः ।**

[5] **म० । ७ । १४२ ।** [6] **कु० । ७ । १४२ । संपाद्योद्युक्तः ।**

[7] **म० । ७ । १५९ ।** [8] **म० । १ १६० ।**

[9] **म० । षड्गुणान् ।** [10] **या० । १ । ३४६ ।**

[1]उपाया: साम दानं च भेदो दण्डस्तथैव च ।
सम्यक् प्रयुक्ताः सिध्ये[2]युर्दण्डस्त्वगतिका गतिः ॥

साम प्रियभाषणं, दानं सुवर्णादिः, भेदो भेदनं, वधपर्य्यन्तोऽपकारो दण्डः । पुनः स एवाह[3] ।

सन्धिं च विग्रहं यानमासनं संश्रयं तथा ।
द्वैधीभावं गुणानेतान्यथावत्परिपालयेत्[4] ॥

अमीषां कालानाह मनुः[5] ।

यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत् ॥
यदा प्रकृष्टा[6] मन्येत सर्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथात्मानं तदा कुर्वीत विग्रहम् ॥
यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतं च तदा यायाद्रिपुं प्रति ॥
यदा तु स्यात्परिक्षीणो वाहनेन बलेन च ।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन्[7] ॥
मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ।
तदा द्विधा बलं कृत्वा साधयेत्कार्य्यमात्मनः ॥
यदा परबलानां तु [8]गमनीयतमो भवेत् ।
तदा तु संश्रयेत्क्षिप्रं धार्म्मिकं बलिनं नृपम् ॥

आयत्यामुत्तरकाले, तदात्वे तत्काले, गमनीयतमोऽतिशयेन ग्राह्यो, निज-प्रकृतिदोषादिना राजेति शेषः ॥

तत्सेवनप्रकारमाह[9] ।

निग्रहं[9] प्रकृतीनां च कुर्य्याद्योऽरिबलस्य च ।
उपसेवेत तन्नित्यं सर्वयत्नैर्गुरुर्यथा[10] ।

---

[1] उपवाह्य। (घ) (ङ)योः। [2] सिद्धेयुः। (ङ)। [3] या०। १। ३४७।
[4] या०। 'परिकल्पयेत्'। [5] म०। ७। १६९–१७४।
[6] म०। प्रहृष्टा। [7] म०। 'अरिम्'।
[8] गमनीयतमो भवेदित्यादि तदात्वे तत्काले इत्यन्तः पाठो लेखकप्रमादात् (ङ) पुस्तके त्रुटितः। [9] म०। ७। १७५। (घ) (ङ)योः। विग्रहं।
[10] म०। ०गरुं यथा।

संश्रयतो वैगुण्ये ।

[1]यदि तत्रापि संपश्येद्दोषं संश्रयकारितम् ।
सुयुद्धमपि तत्रापि निर्विशङ्कः[2] समाचरेत् ।

यद्येवं केनाप्युपायेनात्मरक्षा न स्यात्तदा क्षत्रियाणां युद्धमेवाश्रय इति निर्वि-शङ्कः । ननु सेवा श्ववृत्तिरयशस्करी "धर्म्माद्धि युद्धाच्छ्रे-योऽन्यत्क्षत्रियस्य न विद्यत" इत्यादिभगवद्वाक्या-[3]त्पश्चात्कर्त्तव्यमिति च प्रथममेव कथं नेति, सत्यमेतत्, परन्तु एषा श्ववृत्तिरपि धर्म्म्यैव[4] वचनात् प्रथमोक्तश्रुतिस्मृतिबलात् स्वरक्षापूर्वकमेव यशः प्रशस्तम् । प्रथमयुद्धे निन्दा चेति तदाह मनुरेव[5]

उपजप्यानुजपेद्बुध्येतैव[6] च तत्कृतम् ।
युक्ते च दैवे[7] युध्येत[8] जयप्रेप्सुरपेतभीः ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक्
विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ॥
अनित्यो विजयो यस्माद् दृश्यते युध्य[9]मानयोः ।
पराजयश्च संग्रामे तस्माद्युद्धं विवर्ज्जयेत् ॥

तथा ।[10]

सर्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः ।
यथास्याऽभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥
आयतिं[11] सर्वकार्य्याणां तदात्वं च विचारयेत् ।
अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥
आयत्यां[12] गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्य्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥

---

[1] म० । ७ । १७६ । [2] म० । 'स युद्धमेव . . . निर्वितर्कः' ।
[3] भ० गीता । २ । ३१ ॥ पुस्तकेषु 'धर्माद्धि युद्धः' पाठो न समीचीनः ।
[4] धर्म्मैवेति (ङ) पुस्तकपाठो ऽशुद्धः । [5] म० । ७ । १९७–९९ ।
[6] पुस्तकेषु ०प्येत बुद्धेच्चैवेति भ्रष्टः पाठः ।
[7] देवैरिति पुस्तकेषु । [8] (ङ) । युद्धेत ।
[9] (ङ) । युद्धमानयोः । [10] म० । ७ । १७७–७९ ।
[11] आयन्तिमिति (क) (ख) (ग) पुस्तकेषु ॥ (घ) (ङ)योः । आयन्ती ।
[12] (क) (ख) (ग) पुस्तकेषु अयन्त्यामिति ॥ (घ) (ङ)योः । आयन्त्या ।

मित्रोदासीनशात्रव इति द्वादशराजमण्डलाभिप्रायेण [।] तदाह **याज्ञवल्क्यः** ।

अरिर्म्मित्रमुदासीनोऽनन्तरस्तत्परः परः[१] ।
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥

**मनुः**[२] ।

मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥
एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चान्याः समाख्याताः द्वादशैव तु ताः स्मृताः ॥

अस्यार्थः। विजिगीषु[३]नृपस्य चतुर्दिक्षु क्रमशोऽरिमित्रोदासीनास्त्रय एवं द्वादशराजक[४]मण्डलं विजिगीषुणा त्रयोदशकराजकमिति । अरिमित्रोदासीनास्त्रिविधाः सहजकृत्रिमप्राकृतभेदात्, एतद्भिन्नो निग्रहानुग्रहसमर्थो मध्यमः, पार्ष्णिग्राहाक्रन्दसेवा एषामन्तर्भवन्ति[५] नीतिशास्त्रे[६] **मयमैत्रविशालाक्षादि-मनु-बृहस्पतिशुक्रा**दिमतभेदेन चतुर्विंशत्यधिकत्रिशतं मण्डलं तद्विस्तरभयान्नोक्तम्। चिन्तयेदिति शेषः ।

[७]बकवत् चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चानुलुम्पेत शशवच्च विनिष्पतेत् ॥

बकवन्मत्स्यग्रहणे यथा बकः, सिंहवत्प्रबलेऽपि हस्तिनि यथा पराक्रमेत्[८] तथा, विपक्षे[९] वृकवत् यथा वृकः रक्षितमपि पशुं व्यापादयति [१०]दुर्गादिरक्षितमप्यरिं लुम्पेत् व्यापादयेत्, शशवद्यथा शशः प्राणघातका[११]वृतोऽपि कुटिलगत्या प्रपलाय्य गच्छति तथा शत्रुपरिवृतो रिपुं प्रतारयन्बलवन्तमन्यमाश्रयेत् ।

---

[१] **या० । १ । ३४५ । "ऽन्तरन्तरत्परस्परः" इति "ऽन्तरन्तं परस्परः" इति च पाठौ रत्नाकरपुस्तकस्थौ प्रामादिकौ ।**
[२] **म० । ७ । १५५–६ ।** [३] **विजिगीषोर्नृपस्य । (ङ) ।**
[४] **राजकं मण्डलं । (ङ) ।** [५] **भवति । (घ) (ङ)योः ।**
[६] **कामन्दकीये । ८ । २०–३८ । वचनानि द्रष्टव्यानि ।**
[७] **म० । ७ । १०६ ।** [८] **पराक्रमीत । (घ) (ङ)योः ।**
[९] **तथारिपक्षे । (घ) ।** [१०] **तथा दुर्गादि० । (घ) ।**
[११] **प्राणघातको वृतोपीति (घ) (ङ)योरशुद्धः पाठः ।**

[1]एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।
तानानयेद्वशं सर्वान् सामादिभिरुपक्रमैः[2] ॥

प्रजापालने हेतुमाह ।

[3]मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥

तत्प्रकारमाह[4] ।

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥

निर्दातात्र कृषीबलः, कक्षं तृणसमूहं, उद्धरति समुत्पाटयति । अधिकारिण आह[5] ।

द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्मप्रतिष्ठितम्[6] ।
तथा ग्रामशतानां च कुर्य्याद्राष्ट्रस्य संग्रहम् ॥
ग्रामस्याधिपतिं कुर्य्याद्दशग्रामपतिं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥

राष्ट्रस्य संग्रहं राष्ट्ररक्षास्थानम् । एकस्य दशानां विंशतेः शतस्य सहस्रस्य वा ग्रामाधिपतिमेकं कुर्य्यात् लाघवगौरवापेक्ष उक्तविकल्पः ।

[7]ग्रामे दोषान् [8]समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ।
शंसेद् ग्रामदशेशाय[9] दशेशो विंशतीशने ॥
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शंसेद् ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥

---

[1] म० । ७ । १०७ ।
[2] उपक्रमेदिति (क) (ख) (ग) (ङ)पुस्तकेषु ।
[3] म० । ७ । १११–११२ । [4] म० । ७ । ११० ।
[5] म० । ७ । ११४–५ । [6] म० । 'गुल्ममधिष्ठितम्' ।
[7] म० । ७ । ११६–७ ।
[8] (क) (घ) (ङ)पुस्तकेषु । 'ग्रामादायान्' ।
[9] शतेशाय । इति (क) (ख) (ग) (घ)पुस्तकेषु ।

एते पालने स्वयमसमर्थाः परस्मै निवेदयेयुरिति ।

[1]यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः[2] ।
अन्न[3]पानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥
दशी हलं तु[4] भुञ्जीत विंशी पञ्चहलानि [5]च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥
तेषां ग्राम्याणि कार्य्याणि पृथक्कार्य्याणि चैव हि ।
राज्ञोऽन्यस्सचिवः स्निग्धस्तानि पश्येदतन्त्रितः[6] ॥
[7]नगरे नगरे चैकं कुर्य्यात्सर्वार्थचिन्तकम् ।
उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥

राजप्रदेयानि राज्ञो देयानि, दशी दशग्रामाधिपः तेषामियं वृत्तिरित्यर्थः ।

[8]राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥
ये कार्षिकेभ्यो[9] ऽर्थमेवं गृह्णीयुः पापचेतसः ।
तेषां सर्वस्वमादाय राजा कुर्य्यात् प्रवासनम् ॥

प्रवासनं[10] देशात्तेषां निष्काशनम् । एवं बहुविधप्रजापालनप्रकारं संक्षिप्याह **याज्ञवल्क्यः**[11] ।

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ।
स्याद्राजाऽऽश्रितवर्गेषु[12] प्रजासु च यथा पिता ॥

अथ राज्ञः समरापलायनादयो धर्म्मशास्त्रे निगदिताः । अत्र तु पराङ्मुखस्यार्थहान्यादीति प्रसङ्गः[13] ॥

इति श्रीचण्डेश्वरकृतो राजकृत्यतरङ्गः ।

---

[1] म० । ७ । ११८–१२१ । [2] (क) । 'ग्रामराशिभिः' ।
[3] (क) (ख) । अनु० । [4] म० । कुलं तु । इति ॥
[5] म० । 'पञ्चकुलानि' । "कुलं ग्रामैकदेशः......इति कल्पतरुः । अन्ये तु कुलं हलद्वयकृष्टा भूः । 'कुलं तु द्विगुणं हलम्' इति स्मरणात् । ... 'अष्टागवं धर्म्यहलम्' ... इति हारीतस्मरणात्" । इति मित्रमिश्रः राजनीतिप्रकाश । पृ० २५१ । [6] म० । 'अतन्द्रितः' । [7] नागरे । (घ) ।
[8] म० । ७ । १२३–२४ । [9] म० । 'कार्य्यिकेभ्यः' ।
[10] प्रवासनमिति नास्ति । (ङ) । [11] या० । १ । ३३४ ।
[12] या० । 'भृत्यवर्गेषु' । [13] (क) (ख) । ०हान्यादिति० ।

## अथ दण्डः । (C. XIII.)

**मनुः**[१] ।

तस्यार्थं सर्वभूतानां गोप्तारं धर्म्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्प्यन्ते[२] स्वधर्म्मान्न चलन्ति च ॥

तथा ।

दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः ॥
समीक्ष्य मध्यतः[३] सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥

**याज्ञवल्क्यः**[४] ।

तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।
धर्म्मो हि दण्डरूपेण ब्रह्मणा निर्म्मितः पुरा ॥

तदवाप्य राज्यं प्राप्य, पातयेन्नियोजयेत् ।
[५]दण्डो द्विविधः । शारीरोऽर्थदण्डश्च । यथाह **नारदः**[६] ।

शारीरश्चार्थदण्डश्च दण्डश्च[७] द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मारणान्तः प्रकीर्तितः ॥

---

[१] म० । ७ । १४–१५ । १८ । १९ ।
[२] म० । 'कल्पन्ते' ।
[३] म० । (ग) । 'स धृतः' ।
[४] या० । १ । ३५४ ।
[५] "दण्डो द्विविधः... तथैव च" इत्यानुपूर्विकः पाठो मिताक्षरायामपि दृश्यते । (या० १ । ३६१) ।
[६] ना० । परिशिष्टे । ५३–५४ ।
[७] दण्डस्तु । (घ) ।

काकिन्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ।

शारीरोऽर्थदण्डश्चापि दशधा [।] तत्तु **पल्लवे** विस्तृतम् । **याज्ञवल्क्यः** ।[१] "शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्तथैवचेति **मिताक्षरा** [२] । शारीरस्ताडनादिरर्थदण्डः काकिन्यादिः, कस्मिन् कियानितिव्यवहारदर्शने नियमितम्। संक्षिप्य दण्डभेदानाह **स** एव ।

[३]धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।
योज्या व्यस्ताः समस्ताश्च ह्यपराधवशादिमे ॥

वाग्दण्डश्शापवचनात्मकः ।

ज्ञात्वापराधं कालं च देशं बलमथापि वा ।
वयः कार्य्यं च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥

अपराधानुसारिणो दण्डा इति । दण्डस्य दृष्टादृष्टार्थफलकत्वं धनदण्डवधदण्डयोरुक्तत्वात् तदाह **मनुः**[४] ।

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः[५] ।
दण्डस्य हि भयात्सर्वं जगद् भोगाय कल्प्यते[६] ॥
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय [७]कल्पन्ते दण्डेनैव निपीडिताः ॥
दुष्येयु[८]स्सर्ववर्णाश्च भिद्येरन् सर्वमेव तत्[९] [?] ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ।
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्म्मकामार्थकोविदम् ॥
तं राजा प्रणमे[१०]त्सम्यक् त्रिवर्गेणाभिवर्धते ।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥

---

[१] **याज्ञवल्क्यवचनमत्र पतितम् ।** [२] **या० । १ । ३६१ ।**
[३] **या० । १ । ३६७–८ ।** [४] **म० । ७ । २२–२८ ।**
[५] **'शुचो नरः' । इति (क) (ख) (ग) पुस्तकेषु ।**
[६] **म० । 'कल्प०' ।** [७] **कल्प्यन्ते । (घ) (ङ) योः ।**
[८] **दुःखेयुः । इति (क) (ख) (ग) पुस्तकेषु ।**
[९] **म० । 'सर्वसेतवः' ।** [१०] **म० । 'प्रणयन्' ।**

दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥

**याज्ञवल्क्यः**[1] ।

अधर्म्मदण्डनं स्वर्गकीर्त्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञां[2] स्वर्गकीर्तियशोवहम्[2] ॥

अत्र दण्डनं काम्यमन्यत्र नित्य[3]मतो नित्यकाम्यम् । यत्तु काम्यमेव नित्यमेव[3] वा तन्न । तदकरणे

"दण्डोत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रं पुरोहितः कृच्छ्रमदण्डयदण्डने पुरोहित" इति **वसिष्ठवचनेन**[4] प्रायश्चित्तश्रवणात् ।

[5]यो दण्डयान् दण्डयेद्राजा सम्यग्वध्यांश्च पातयेत्[6] ।
इष्टं स्यात् क्रतुभिस्तेन समाप्तवरदक्षिणैः ।
[7]दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते[8] ।

इत्यादिबहुतरफलश्रवणाच्च(।) न च सन्ध्योपासनादिवत् फलश्रवणे नित्यत्वमिति वाच्यं साक्षात्सुखादेरेव फलत्वे विवक्षितत्वात्, अन्यथा [9]तयोरेकशेषः कर्त्तुमशक्यत्वात् ।

[10]इति संचिन्त्य नृपतिः क्रतुतुल्यफलं[10] पृथक् ।
व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥

साध्य[11]मूलविवादो व्यवहारः । स तु प्रजानामेव नृपस्य तदीशत्वादिति न राजेश्वरेण न्यायपथादुत्पथिकस्य धर्म्मभङ्गभिया व्यवहारो द्रष्टव्य एव विशेष[12]पुरस्कारेणान्यथा 'स्वतन्त्रः पृथिवीपति' रित्यस्य कृतनिवृत्त्यप्रसङ्गः स्यात् ।

---

[1] या० । १ । ३५७ । [2] याः । ०राज्ञः०जयावहम् । इति ।
[3] नित्यमत इति । नित्यमेव वेति च नास्ति (ङ)पुस्तके ।
[4] व० । १९ । ४०–४२ । [5] या० । १ । ३५९ ।
[6] या० । 'घातयेत्' । [7] म० । ७ । २२ । [8] (ङ) । कल्प्यते ।
[9] विशेष इत्यर्थः । एकशेषकर्त्तुमिति (ङ)पुस्तकपाठोऽशुद्धः ।
[10] या० । १ । ३५८ । फली इति (ङ)पुस्तके ।
[11] (ङ) । मध्ये मूलविवाद इति पाठोऽशुद्धः ।
[12] "विशेषः" । इति (क)(ख)(ग)(घ)पुस्तकेषु ।

मनुः[1] ।

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा ।
प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥

शुचिनार्थादिशौचयुक्तेन, सत्यसन्धेन दृढप्रतिज्ञेन ।

[2]सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥

इति विधिनिषेधौ ॥

इति चण्डेश्वरकृतो दण्डतरङ्गः ॥

---

[1] म० । ७ । ३१ । [2] म० । ७ । ३० ।

## अथ राजकृतराज्यदानम् ॥ (C. XIV)

तत्र **मनुः**[१] ।

दत्त्वा दानं[२] तु विप्रेभ्यः सर्वदण्डसमु[३]च्छ्रितम् ।
पुत्रे राज्यं समासज्य[४] कुर्वीत प्रायणं रणे ।

रणमुपलक्षणं मोक्षसाधनोपाय इत्यर्थः । अयमर्थः राजा राज्या[५]न्निस्पृहत्वे ज्येष्ठपुत्राय राज्यं दत्त्वा मोक्षसाधनोपायं कुर्य्यात् । ननु[६] पुत्रमात्रोपादाने कथं ज्येष्ठायैवेति चेन्न ।

यदा राजा जरायुक्तो रोगार्त्तो निस्पृहोऽपि च ।
आसन्नमृत्युं विज्ञाय कुलधर्म्मं विचारयन् ॥
तदा पौरजनान् सर्वानाहूय मन्त्रयेच्च तैः ।
सप्ताङ्गानि च राज्यानि ज्येष्ठपुत्राय दापयेत् ॥

दापयेत् दद्यात्, 'विधाय वृत्तिं बहूनां राज्यं ज्येष्ठाय दापयेदि'ति **राजनीतौ**[७] **हारीत-नारद**-वचनेभ्यः । पुत्र इत्येकवचनेनानेकस्यासम्भवात् । प्राधान्याज्ज्येष्ठस्य न्याय्यत्वाच्च । अत्रार्थे **मनुः**[८] ।

यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ।
स एव धर्म्मजः पुत्रः कामजानितरान्विदुः ॥

अत्रैवैतदर्थे **व्यासः** ।

शाश्वतोऽयं स्मृतो धर्म्मः पार्थिवानां नरर्षभ ।
न यवीयान् स्थिते ज्येष्ठे राजा भवितुमर्हति ॥

---

[१] म० । ९ । ३२३ ।
[२] म० । (ख) (ङ)योः । धनमिति ।
[३] म० । 'सर्वंदण्डसमुत्थितम्' ।
[४] म० । 'समासृज्य' ।
[५] राज्यास्पृहत्वे । (घ) (ङ)योः ।
[६] नन्वित्यारभ्य कुलधर्मं विचारयन्नित्यन्तः पाठो नास्ति (ङ) पुस्तके ।
[७] न हि कामन्दकनीतौ हारीतनारदवचनानि सन्ति । एषा ऽपरैव राजनीतिः काचित् ।
[८] म० । ९ । १०७ ।

यवीयान् कनिष्ठः शाश्वतोऽयमिति सनातनोऽनादिपरम्परागतधर्म्मोऽयं पार्थिवानामित्यन्वयः। **भारते**[1] ।

कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।
एतत्सम्बोधयामस्त्वां धर्म्मं त्वं परिपालय ॥

ज्येष्ठं तिरस्कृत्य कनीयसे राज्यदानमधर्म्म इति वचनाशयः। **रामायणे**[2] ।

न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि[3] ।
[4]बहूनामपि पुत्राणामेको राज्येऽभिषिच्यते ॥
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ।
तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः ॥
आसञ्जन्त्य[5]नवद्याङ्गि गुणवत्स्वितरेष्वपि ।
[4]ते च ज्येष्ठाः सुपुत्रेषु ज्येष्ठेष्वेव न संशयः ।
[4]आसञ्जन्त्यखिलं राज्यं न भ्रातृषु कथञ्चन ।

स्थाप्यमानेष्वित्यादियुक्त्या एक एव राजा तत्रापि ज्येष्ठ एवेति दर्शितम्। आसञ्जन्ति निःक्षिपन्ति तन्त्राणि कार्य्याणि। अत्रैव **वसिष्ठ-वाक्यम्**[6] ।

इक्ष्वाकूणां च सर्वेषां राजा भवति पूर्वजः ।
पूर्वजे नावरः पुत्रो[7] राज्ये समभिषिच्यते ॥

इक्ष्वाकूणामित्युपलक्षणं च शब्दात्। राज्ञामेतत्समं तस्मादिक्ष्वाकूणां विशेषत इति पुनस्तत्रैव तेनोक्तत्वाच्च[8] । ननु राज्यदानमेकस्मा[9] इ"त्यर्थ-शास्त्रात्तु बलवद्धर्म्मशास्त्रमिति[10] स्थिति"रिति वचनाद्धर्म्मशास्त्रस्य प्राबल्ये "[11]पैतामहं च पित्र्यं चे"त्यादिवाक्येन तस्यापि विभाज्यतेति चेन्न, राज्यमवि-

---

[1] **म० भा० । आदि० । ७९ । २२ ।**
[2] **रा० । अयो० । ८ । २३–२४ ।**
[3] **भाविनि । (ङ) ।**
[4] **नोपलभ्यते मुद्रितरामायणे । (ङ) समासन्त्यखिलं राज्यं ।**
[5] **रा० । स्थापयन्तीति ।** [6] **रा० । अयो० । ११० । ३६ ।**
[7] **रा० । 'ज्येष्ठो राजाभिषिच्यते ।'**
[8] **तेनोक्तम् । (ङ) ।**
[9] **(ख) एकस्मिन्नपी० । एकस्मिन् (ङ) ।**
[10] **या० । २ । २१ ।** [11] **पिता० इति पुस्तकेषु ।**

भाज्यमिति वक्ष्यमाणत्वात्। तदुभयान्यथासिद्धौ तद्वचना[1]प्रसक्तेः राज्ञा दत्त-स्यानिवर्त्यत्वे[2]नापि राज्यस्याविभज्यत्वाच्च[3]। अत्र **मनुः**[4]।

तस्माद्धर्म्मं यमिष्टेषु[5] संव्यवस्येन्नराधिपः।
अनिष्टं चाप्यनिष्टेषु तद्धर्म्मंन्न विचालयेत्॥

न विचालयेन्नोल्लङ्घयेत्।

**नारदः**[6]।

अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः[7] पृथिवीपतिः।

'स्वातन्त्र्यमप्रतिहतेच्छत्वं राजा महीपति'रिति **कामधेनौ** स्पष्टम्। न च "[8]भूर्य"त्यादिवचनेन क्रमागते राज्ये स्वाम्यसाम्यात्स्वार्ज्जितं राज्यं देयमिति वाच्यं तेषां मुनिभिरविशेषेणोपादेयत्वात् क्रमागतराज्यदान एव **वसिष्ठाद्युक्ते** 'र्लोकवृत्ताद्राजवृत्तमन्यदाह **बृहस्पति**' रितिवचनात्तेषां राज्यातिरिक्तपरत्वाच्च। राजकृतं प्रमाणमत्र हेतुमाह।

**मनुः**[9]।

सोग्निर्भवति वायुश्च सोर्कः सोमः स धर्म्मराट्।
स कुबेरस्स वरुणस्स महेन्द्रः प्रभावतः॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा[10] नररूपेण तिष्ठति॥

---

[1] ०वचनप्रसक्तेः। इति पुस्तकेषु
[2] अनिवर्त्तत्वेन। (घ) (ङ)योः।
[3] (क) (ख) (घ) (ङ)। अविभाज्य०।
[4] म०। ७। १३।
[5] (क) (ख) (ग) पुस्तकेषु—'यविष्ठेषु'।
[6] ना०। ऋ०। ३३। नारद इत्यारभ्य राज्यातिरिक्तपरत्वाच्चेत्यन्तः पाठो नास्ति (ङ)पुस्तके।
[7] स्वतन्त्रं च महीपतिः। (घ)।
[8] या०। २। १२१।
[9] म०। ७। ७–८।
[10] ह्येता। (घ)।

**कात्यायनः ।**

क्षयोदयौ[1] जीवनं च राजदैववशान्नृणाम् ।
तस्मात् सर्वेषु कार्य्येषु तत्कृतं न विचालयेदिति[2] ॥

इति श्रीचण्डेश्वरकृतोऽत्र राज्यदानतरङ्गः[3] ॥

---

[1] क्षयोदयो० इति (क) (ख) (ग) (ङ) पुस्तकेषु ।

[2] नारदः । अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रश्च महीपतिः । स्वातन्त्र्यमप्रतिहतेच्छत्वं राजा महीपतिरिति कामधेनौ स्पष्टम् । न च भूर्येत्यादिवचनबलात्क्रमागतराज्ये स्वाम्यसाम्यात्स्वार्जितं राज्यं देयमिति वाच्यम् । तेषां मुनिभिरविशेषेणोपादेयत्वात्क्रमागतराज्यदानतरङ्गः ॥ (ङ) ।

[3] नास्ति । (ङ) ।

## अथ पुरोहितादिकृतराज्यदानम् ॥ (C.XV.)

[1]राज्यमदत्त्वैव राज्ञि मृते राजपुत्राय पुरोहितमन्त्रिभिरपि राज्यं दातव्यं वैदिकलौकिककर्म्मसु[2] राजप्रातिनिध्यात्। बहुषु ज्येष्ठायेति सम्प्रदायः। ननु राजपरोक्षे राजपुत्रस्यैव राज्यं कथं तैर्दातव्यमिति चेन्न। तैरेव न ग्राह्यमधर्म्म-श्रवणादित्यभिप्रायात्। 'अत्र विवादपरिहारार्थं'मिति **लक्ष्मीधरः**। 'राज्य-भङ्गभिये'ति **पल्लवकारः**। **राजनीतौ नारदः**[3]।

ज्येष्ठो नरकनिस्तारो लोक[4]पूज्यतमः स्मृतः।
ज्येष्ठो रत्नाकरः प्रोक्तो राज्यार्हो ज्येष्ठ एव हि ॥

**राजनीतौ शुक्रः**[5]।

राज्यं पुरो विवाहं च सपिण्डीकरणं पितुः।
गुणवत्सु कनिष्ठेषु ज्येष्ठ एव समर्हति ॥

इदं **बार्हस्पत्यपद्मयो**रपि।

**भागवते**[6]।

[7]शुमन्तुर्ब्राह्मणैरुक्तः परिवेत्ता त्वमग्रभुक्।
[8]राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥

तथा च राज्ययोग्ये ज्येष्ठे सति स एव राजा तदभावे कनिष्ठः, तदभावे राजवंश्यः। अत्र ज्येष्ठः पिता यस्य प्रथमं मुखं पश्यति स एव तेन वैमात्रेय-स्यापि संग्रहः। न विवाहसाहचर्य्यात्सोदरपरनियमः पितुः सपिण्डीकरण-साहचर्य्यात् अन्यथा **रामायणे** रामादीनुपलक्ष्य वसिष्ठादिवाक्यस्यालग्नता-

---

[1] राजमदत्वैवेति (ङ) पु० पाठोऽशुद्धः।
[2] (क) (ग)। ०धर्म्मसु।
[3] नास्ति नारदीये धर्मशास्त्रे।
[4] (ङ)। लोके।
[5] नास्ति मुद्रितशुक्रनीतौ।
[6] भाग०। ९। २२। १५
[7] भाग०। "शन्तनुः"।
[8] (घ)। राजन्।

पत्तिः स्यात्। किञ्च 'स्थाप्यमानेष्वित्यादि'[१] युक्तिः समैव चेति तत्त्वम्। अतएव राज्यमविभाज्यमाह **मनुः**[२]।

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥

योगक्षेमं मन्त्रिपुरोहितादि[३]। केचित्तु नौकादि तन्न, 'योगक्षेमं स्मृतं राज्यमिति' कोषात्। राज्यमाह[तुः] **मनुविष्णू**[४]। स्वाम्यमात्यसुहृत्कोषदण्ड-दुर्गराष्ट्रप्रकृतयः[५]। एतत्सप्ताङ्गकं राज्यमुच्यते। सुहृत्पुरोहितः[६]। दण्डस्सेना **याज्ञवल्क्यः**[७]।

स्वाम्यमात्यो जनो दुर्गं कोषो दण्डस्तथैव च।
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते॥

जनः प्रजाः, **मनुवचनैकवाक्यतया** मित्राणि राष्ट्राणि[८]।

**नारदः**[९]।

स्त्रीधनं च नरेन्द्राणां न कदापि च जीर्यति।

स्त्रीधनं सौदायिकं, नरेन्द्रधनं राज्यम्। **कात्यायनः**। "निबन्धो यः क्रमागतः"। तथा च। **धर्म्मशास्त्रे**ऽपि राज्यमविभाज्यमित्येवम**र्थशास्त्रे** ज्येष्ठ एव राजा भवेदित्युभयोरविरोधः। तर्हि लोकवत्ताद्रा[१०]जवृत्तस्य को भेद इति, नैतत्।

---

[१] रा०। अयो०। ८। २३।

[२] म०। ९। २१९। अतएव षडङ्गं राज्यमविभाज्यमाह मनुरिति (ङ)पाठः।

[३] 'योगक्षेमं यतो योगे क्षेमं भवति मन्त्रिपुरोहितामात्यवृद्धवास्तुचारादिभ्य-स्ततो रक्षा भवति।' इति मेधातिथिः। 'योगो राजादिलभ्यो निबन्धादिः स्वयमुपात्तः क्षेमः रक्षोपायः प्राकारेष्टकादिः'। इति सर्वज्ञनारायणः।

[४] म०। ९। २९४। वि०। ३। ३३। (घ) (ङ)योः। राज्यमाह मनु-रिति पाठः।

[५] ०राष्ट्राणि प्रकृतय इति पठनीयम्।

[६] इत्यसमीचीनम्। सुहृन्मित्रमिति। तादृगर्थस्याभावादर्थशास्त्रे। मित्रलक्षणं च द्रष्टव्यमर्थशास्त्रे। [७] या०। १। ३५३।

[८] प्रामादिकमेतत्। जनः राष्ट्रं, पुरं दुर्गमिति मनुवचनैकवाक्यता।

[९] ना०। व्य०। ८३। [१०] लोकवृत्तात्तस्य को भेद इति (ङ)।

विकारं याति पुत्रोऽपि राज्यलोभाद्यथा पिता ।
तल्लोकवृत्तान्नृपतेरन्यद् वृत्तं प्रचक्षते ॥

इति **शुक्रवचनेन**[१] भेदप्रतीतेः ।

राजधने दीनानाथादिसकलप्राणिनामंशित्वं बहुनायकत्वाद्राज्यविनाशश्चेति युक्तिरिति **गोपाल-लक्ष्मीधर-श्रीकरादयः । अर्थप्रदीपे व्यासः ।**

पूर्वजन्मार्ज्जितं पापमुपभोक्तुमिह व्रजेत् ।
राज्ञो द्वितीयकः पुत्रस्तृतीयो [२]यदजासुतः ॥
उत्पत्तिकालादारभ्य सदा तौ दुःखभागिनौ ।

एतन्मूलक एव लोके तदुद्घोष इति। तथा च ज्येष्ठगामित्वमविभाज्यत्वं राज्यस्येति बुद्ध्वा पुरोहितादिनापि राज्यदानं कर्त्तव्यमिति प्रकरणार्थः ॥

इति श्रीचण्डेश्वरकृतोऽत्र पुरोहितादिकृतराज्यदानतरङ्गः ॥

---

[१] **नोपलभ्यते शुक्रनीतौ ।**

[२] **तृतयः कामजः सुत इति (ङ)पुस्तकपाठः प्रामादिकः ।**

## अथाभिषेकः[1] ॥ (C. XVI)

**राजनीतौ**[2] ।

यौवराज्येऽथवा राज्ये यदि राजा विमत्सरः ।
अभिषिच्य[3] विधानेन धर्म्मजं वीक्ष्य लक्षणम् ॥
तत्सुतं तत्कनिष्ठादिक्रमात्कामजमात्मजम् ।
सन्निकृष्टान्वयं चान्यं प्रजाविप्रानुमोदितम् ॥

युवराजेति वृद्ध[4]राजसापेक्षं वृद्धराजपरतन्त्र[5] इत्यर्थः। विमत्सरो विगत[6]राज्यमात्सर्य्यः, धर्म्मजं ज्येष्ठं कामजं कनिष्ठं, तथा च यदि राजलक्षणं ज्येष्ठे तदा ज्येष्ठमेव तदभावे[7] ज्येष्ठपुत्रस्य ज्येष्ठमेव[8] पुत्रत्वम्[8]।

"[9]तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः"।

इति वचनात् तदभावे यथाक्रमं कनिष्ठं तदभावे सन्निकृष्टसन्तानम् [10]सन्निकृष्टान्वयामति। 'सन्निहितसम्बन्धिमात्र'मिति **पल्लवः**। 'तद्वंश्यमे' वेति **लक्ष्मीधरः**[7]। तदभावेऽन्यमप्यभिषिञ्चेत्। न[11] च पिण्डदातरि पुत्रे' सति पौत्राभिषेकस्यान्याय्यत्वमतो नात्र क्रमादरः[12]। पुत्रपौत्रादौ पिण्डदातृ-

---

[1] (ङ)। अथ राज्याभिषेकः।
[2] (ङ)। राजनीतिः।
[3] (ख) (ग) (घ) (ङ)पुस्तकेषु। अभिषिञ्चेत।
[4] (घ) (ङ)योः। वृद्धसापेक्षं।
[5] (ङ) (घ)योः।वृद्धराजपरतन्त्रराजा।
[6] (घ) (ङ)योः। गतमात्सर्यः।
[7] तदभावे ज्येष्ठपुत्रस्येत्यारभ्य लक्ष्मीधर इत्यन्तः पाठः (ख) (ङ) पुस्तकयोर्नास्ति।
[8] (घ)। ज्येष्ठमेवेति नास्ति। (घ)। पुत्रम्।
[9] (घ)। तेपि ज्येष्ठा इत्यारभ्य वचनादित्यन्तः पाठो नास्ति।
[10] (घ) सन्निकृष्टान्वयमितीत्यारभ्य लक्ष्मीधर इत्यन्तः पाठो नास्ति।
[11] (घ) (ङ)योः। "न च" इति नास्ति।
[12] (घ) (ङ)योः। 'क्रमादर इति तत्र'।

त्वेनाविशेषात् अतएव पौत्रे समांशिताविधान[1] मिति । कि[2]'ञ्चात्मा वै जायते पुत्र' इति तत्स्वरूपत्वात्[3] वस्तुतस्तु "राजवृत्तमन्यदि"[4] तियुक्तिरेव बलवतीति[4] ।

[5]कृतनित्यक्रियो राजा स्वयं वास्य पुरोहितः ।
शुक्ले वसानो वसने प्रविशेद्यज्ञमण्डपे ॥
सौवर्णं स्थापयेत्तत्र कलशं दृढमग्रतः ।
पूरयेत्सर्वतीर्थाद्भिर्गाङ्गेन पयसाऽथवा ॥
वारुणेनाभिमन्त्र्यान्तः क्षिपेत्सर्वौषधीस्ततः ।
पञ्चभिः पल्लवैश्छन्नमुखं वरुणमर्च्चयेत् ॥
श्रियं विष्णुमुमामीशं गणग्रहदिगीश्वरान् ।
पूजयेज्जुहुयान्मन्त्रैराज्येनैव सकृत्सकृत् ॥
विसृज्य तान् सभामध्ये व्याघ्रचर्म्मोपरिस्थितम् ।
सुहृद्विप्रवणिग्वीथीमन्त्रिसम्बन्धिसन्निधौ ॥
अभिषिञ्चेच्छान्तिमन्त्रैः पल्लवानीततज्जलैः ।
ततः सिंहासने राजा कुमारमुपवेशयेत् ॥
स्रक्चन्दनपटोष्णीषमणिमुक्तादिभूषणैः ।
चामरव्यजनच्छत्रपत्र[6]द्वीपादुकादिभिः ॥
अलंकृत्य मुदा तस्मै षडङ्गं[7] राज्यमर्पयेत् ।
पादाङ्गुष्ठेन तिलकं त्रिवारमलिके न्यसेत् ॥
मूर्ध्नि दूर्वाक्षतं दद्याद्दधिलाजांश्च दर्शयेत् ।
'अद्यारभ्य न मे राज्यं राजाऽयं रक्षतु प्रजाः' ॥
इति सर्वं[8] प्रजाविष्णु साक्षिणं[9] श्रावयेन्मुहुः ।

---

[1] (घ) (ङ)योः । समांशिताविधानात् ।
[2] (घ) (ङ)योः । किञ्चेति पाठो नास्ति ।
[3] (ख) (घ) (ङ)पुस्तकेषु—व्यवहितयोजनापत्तेश्चेत्यधिकः पाठ उपलभ्यते ।
[4] राजदानतरङ्गे (१४) उदाहृतम् । (घ) (ङ)योः । "राजवृत्तमन्यदिति प्रागुक्तेः" इत्यधिकः पाठः ।
[5] तथाह । (घ) (ङ)योः । [6] पनद्श्री । (घ) (ङ)योः ।
[7] स्वामिसहितं सप्ताङ्गम् । अत्र षडङ्गं स्वामिव्यतिरिक्तम् ।
[8] 'सर्वान्' इति पुस्तकेषु । [9] (क) (ग) । 'साक्षिणः' ।

गाङ्गेन गङ्गाजलेन, पयसा गोक्षीरेण, गाङ्गेन पयसा गङ्गाजलेन, वा शब्दोऽत्र व्यवस्थितविभाषेति **केचित्**; वारुणेन वरुणेन मन्त्रेण, गणो गणपतिः, ग्रहपदेन नवग्रहाः मन्त्रैस्तत्तद्देवतामन्त्रैः, 'सुरास्त्वामभिषिञ्चन्त्वि'त्यादिशान्तिमन्त्रैः, पल्लवानीततज्जलैः कलशमुखक्षिप्तपञ्चपल्लवाहृतजलैः, सिंहासनं(?ने) राजासनं (?ने) कुमारमित्यस्याभिषिञ्चेत् [इति] तात्पर्य्यं[1], पन्नद्धी[2] उपानत्, षडङ्गं मन्त्रिसुहृत्कोषदुर्गराष्ट्रबलात्मकम्, अलिके ललाटे, न्यसेद्द्यादित्यर्थः, अद्यत्याद्यर्धं[3] श्रावयेत् ।

**रामायणे**[4] ।

> सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
> घृतं च दधिलाजांश्च[5] दक्षिणाश्चापि पुष्कलाः ॥
> सूर्य्येऽभ्युदितमात्रे तु भविता पुण्यवाचनम्[6] ।

अत्र ब्राह्मणेभ्यो घृतदधिलाजदानं पुण्यवाचनं चेति विशेषः । ब्राह्मणभोजनमप्यत्रैव "ब्राह्मणाश्च निमन्त्र्यन्ता"मिति[7] । अस्य प्रयोगो **मद्गुरुपद्धतौ**। विस्तरोऽस्य[8] **पल्लवे**। 'अलंकृत्य मुदा तस्मै षडङ्गं राज्यमर्पयेत्। पादाङ्गुष्ठेन तिलकं त्रिवारमलिके न्यसे'दिति दृष्टार्थमन्यत्त्वदृष्टार्थम्। **मनाव**भिषेकं विनापि राज्यदानविधानात् तथा सम्प्रदायाच्च। **कोषकार**मते 'राज्यदानोपलक्षकं तिलकदानादि तेन तद्विनापि तद्भवत्येव श्वपुच्छन्यायाा'दिति। **गोपाल**मते त्व'भिषेकादि पर्य्यन्तमुपलक्षणं यथादेशकुलाचारं सिंहासनदानादि[9] तद्व्यवहारा'दिति। तथा चोक्तविधानेनोत्तमः, तिलकदानमात्रेण मध्यमः। अन्येनाप्यनुक्तप्रकारेणाधमकल्प इति। न चाधमकल्पानादर एव युक्त इति ।

> जातिदेशकुलानां च ये धर्म्माः प्राक् प्रवर्त्तिताः ।
> तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथे-

त्यादिवचनात् व्यवहारस्य सर्वतो बलव[10]त्तरत्वाच्चेति ।

---

[1] अभिषेचे तात्पर्यमिति (ख) (घ) (ङ)पुस्तकेषु पाठः ।
[2] पनद्ध्री । (घ) (ङ)योः । [3] अर्थं । (घ) (ङ)योः ।
[4] रा० । अयो० । ३ । १५–१६ ।
[5] (ख) (घ) (ङ) । रा० । ०लाजाश्च ।
[6] रा० । ०श्वो भविता स्वस्तिवाचनम् ।
[7] रा० । अयो० । ३ । १६ । (घ) (ङ)योः । ब्राह्मणाश्चाप्यामन्त्र्यताम् ।
[8] विस्तारोऽस्य । (घ) (ङ)योः । [9] ०दानादिनापि । (घ) (ङ)योः ।
[10] सर्वतो बलवत्त्वाच्चेति । (ङ) ।

अथान्ये राजपुत्रा भर्त्तव्याः। **नीतौ**[1] ।

प्रजात्मश्रेयसे राजा कुर्वीतात्मजरक्षणम् ।
लोलुप्य[2]मानास्तेऽर्थेषु हन्युरेनमलक्षिताः ॥

**मनुः**[3] ।

भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥

इत्युभयत्र भरण[म्] कारणम्। लोलुप्यमानास्तदुदयमर्थोपभोक्तार इति। रक्षणमत्र वशीकरणम्। **नीतौ**[4] ।

दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखसेवनम्[5] ॥
राजपुत्रः परित्यागं सुदुर्वृत्तोऽपि नार्हति ।
क्लिश्यमानः स्वपितरं परा[6]नाश्रित्य हन्ति हि ॥

दुष्टगजं मत्तगजं[7] सुखसेवनं सुखिनं सुखं तु राजकुलोचितं, परित्यागे ऽर्थधर्म्मातिक्रमो लोकनिन्दापि स्यादतो न परित्यागमर्हतीत्यर्थः ।

**याज्ञवल्क्यः**[8] ।

दत्त्वा निबन्धं भूमिं च[9] कृत्वा लेख्यं च कारयेत् ।
आगामिभद्रनृपतेः[10] परिज्ञानाय पार्थिवः ॥

निबन्धं नियतदेयम्, आगामिभद्रनृपतेः भाविभूपतेः, पार्थिव इति भूपतिस्तस्यैव भूदानाधिकारः, सम्राजादत्तनियतनिबन्धकस्य भोगपतेर्न भूमिदानाधिकारः पारतन्त्र्यात्। अतएव भूपतेरेव भूमिदानाधिकारो न तु भोगपतेरिति **मिताक्षरा**[11] । तथा च तेभ्योऽपि लिखित्वैव राजा दद्यादिति ।

अभिषिक्तः प्रथमं राष्ट्रमेव साधयेत् पश्चादङ्गानि तदाह **शुक्रः**[12] ।

---

[1] कामन्दके । ७ । १ । [2] का० । लोलुभ्य० ।
[3] नोपलभ्यते मानवधर्मशास्त्रे । [4] का० । ७ । ६ । ७ ।
[5] का० । 'सुख-बन्धनम्' । सुखसेविनं । (ङ) ।
[6] अ० का० । स पितरं 'परम्' । मै० का० । 'परान्' ।
[7] मतङ्गराजं । (घ) (ङ)योः ।
[8] या० । १ । ३१८ । [9] या० । 'दत्त्वा भूमिं निबन्धं वा' ।
[10] या० । ०नृपति० । [11] मि० । या० । १ । ३१८ ।
[12] का० । ६ । ३ । नास्ति शुक्रनीतौ ।

राज्याङ्गानां च सर्वेषां राष्ट्राद्भवति संभवः ।
तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं [१]प्रसाधयेत् ॥

प्रसाधयेद् व्यवहारदर्शनादिभिः, व्यवहारदर्शनं तु धर्म्मशास्त्रार्थशास्त्रयोरविरोधेन तदाह **नारदः**[२] ।

धर्म्मशास्त्रार्थशास्त्राभ्यामविरोधेन मार्गतः[३] ।
निरीक्ष्यमाणो निपुणो [४]व्यवहारगतिं नयेत् ॥

अतएव **कात्यायनः** ।

"धर्म्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदै"-

रिति । तथा च नृपस्यैतावत्यर्थकर्त्तव्य[५]तेति निबन्धाभिप्रायः ॥

इति सप्रक्रियमहासान्धिविग्रहिक-ठक्कुर**श्रीवीरेश्वरा**त्मज-**श्रीचण्डेश्वर**विरचिते **राजनीतिरत्नाकरे**ऽभिषेकतरङ्गः ॥

**श्रीचण्डेश्वर**मन्त्रिणो मम वचो निर्म्मत्सरा[६] मत्सरं
दूरीकृत्य विचारयन्तु चतुरा निश्चित्य चेतश्चिरम् ।
मीमांसादिषु पद्धतिप्रभृतिषु व्याख्यासु धर्म्मार्थयो-
र्मान्या मञ्जुमनीषिणो महिभुजःसिद्धान्त[७]मन्त्राप्तये ॥
**मन्वादिस्मृति-राजनीति-जलधे**रादाय संक्षेपतो
नानानीतिनिबन्धसम्मतमतं चित्वा चिराय श्रमात् ।
**श्रीचण्डेश्वर**मन्त्रिणा विरचितो **रत्नाकरो** भूभुजा
भाव्योऽसौ भुवि[८] भूतये भगवता मान्यो वदान्योदयात्[९] ॥

समाप्तोयं राजनीतिरत्नाकरः ॥

धर्मार्थशास्त्रनिष्णातेन **जायसवालो**पाह्वेन **श्रीकाशीप्रसाद**-
कृतिना **पाटलिपुत्र**नगरे **चक्रवर्त्तिजयोर्ज(५)राज**-
विजयराज्ये १९७७ विक्रमाब्दे संस्कृतः ॥

**तेनैव १९९३ विक्रमाब्दे चक्रवर्त्तिनः षष्ठस्य जयोर्जस्य प्रथमाब्दे पुनस्संस्कृतः ॥**

शुभं भूयात् ॥

---

[१] अ० । का० 'समुन्नयेत्' । मैं० का० । 'प्रसाधयेत्' । [२] ना० १ । ३७ ।
[३] ना० । 'यत्नतः' । [४] ना० । 'निपुणम्' । [५] कर्त्तव्येति । (घ) ।
[६] निर्मत्सरं । (घ) (ङ)योः । [७] सिद्धन्तु । (ङ) पाठोऽशुद्धः ।
[८] सुविभूतये । (ङ) । [९] वदान्योदरात् । (घ) (ङ)योः ।